# ॥ अथ श्रीगौतमीयतन्त्रं प्रारभ्यते ॥

॥ श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगोपीजनवल्लभायनमः ॥ सिद्धाश्रमेवसन्धं... न्कदाचिद्गौतमोमुनिः ॥ तपःस्वाध्यायनिरतोभक्तिमान्पुरुषोत्तमे ॥ १ ॥ नमस्यन्शिरसा कृष्णंस्तुवन्वाचाजनार्दनम् ॥ जपन्कराभ्यांयज्ञेशंह्रदिध्यायन्सदाहरिं ॥ २ ॥ समस्तश्रुतितत्वज्ञइतिहासपुराणवित् ॥ मन्त्रौषधिक्रियावश्ययोगासिद्धान्ततत्ववित् ॥ ३ ॥ धर्मार्थकाममोक्षार्थीनारदंप्राणिपत्यच ॥ विनयावनतोभूत्वापर्यपृच्छद्द्विजोत्तमः ॥ ४ ॥ भगवन्कामदामन्त्राःशत्रूदासीनबान्धवाः ॥ विभिन्नफलदास्तेतुनैकत्रफलदामताः ॥ ५ ॥ एतत्समफलाःसर्वेनमन्त्राइतिनःश्रुतं ॥ येनसर्वफलावाप्तिःसर्वेषांबन्धुरेवयः ॥ ६ ॥ सर्ववर्णाधिकारश्चनारीणांयोग्यएवच ॥ तंब्रहीभगवन्मंत्रमल्पायासफलप्रदम् ॥ ७ ॥ तवनाविदितंकिंचिद्दिद्यतेसचराचरे ॥ इतिश्रुत्वामुनिश्रेष्ठोनत्वाविष्णुमुवाचह ॥ ८ ॥ साधुपृष्टंमयाप्येवंपृष्टःप्रावोचदनजः ॥ तथातेकथयिष्यामियथाप्रोक्तंस्वयंभुवा ॥ ९ ॥ सर्वेकामाःप्रसीदंतिकृष्णमंत्रजपाद्द्विज ॥ सर्वेषुमंत्रवर्गेषुश्रेष्ठोवैष्णवउच्यते ॥ १० ॥ गाणपत्येषुशैवेषुतथाशाक्तेषुसुव्रत ॥ वैष्णवेषुचसर्वेषुकृष्णमंत्राःफलाधिकाः ॥ ११ ॥ विशेषतोदशार्णोऽयंजपमात्रेणसिद्धिदः ॥ मंत्रस्यज्ञानमात्रेणलभेन्मुक्तिंचतुर्विधां ॥ १२ ॥ अज्ञानतूलराशीनांज्वलनोऽयंमुनीश्वर ॥ अनेनसदृशोमन्त्रोजगत्स्वपिनविद्यते ॥ १३ ॥ अनेनाराधितःकृष्णःप्रसी

दत्येवतत्क्षणात् ॥ तस्यसंक्षेपतोवक्ष्येसर्वसम्यक्शृणुष्वमे ॥ १४ ॥ पद्मयोनिर्वरारोग्यंदेवराज्यंशचीपतिः ॥ अवापुस्त्रिदशाःस्वर्गवागीशत्वंबृहस्पतिः ॥ १५ ॥ पक्षीणामधिपःसोऽभूद्गरुडोऽपिद्विजोत्तमः ॥ कश्चित्कृष्णंसमाराध्यधनेशत्वमवाप्तवान् ॥ १६ ॥ मंत्रेणकृष्णमाराध्यचंद्रःसर्वजनप्रियः ॥ करोतिस्ववशेकामःसर्वांल्लोकाननेनच ॥ १७ ॥ मंत्राणांपरमंमंत्रंगुह्यानांगुह्यमुत्तमम् ॥ मन्त्रराजमिमंज्ञात्वाकृतार्थोजायतेनरः ॥ १८ ॥ पुत्रवान्धनवान्वाग्मीलक्ष्मीवान्पशुभृत्यवान् ॥ सुभगःसम्मतःश्लाघ्योयशस्वीकीर्तिमान्भवेत् ॥ १९ ॥ सर्वलोकाभिरामःस्यात्सर्वज्ञश्चभवेन्नरः ॥ अनेनात्रिषुलोकेषुयातामुक्तिंमुमुक्षवः ॥ २० ॥ मन्त्रेणानेनमन्त्रज्ञोभक्तिःस्यात्प्रेमलक्षणा ॥ समस्ततीर्थभूतश्चसमस्तक्षेत्रपावनः ॥ २१ ॥ रवेरिवदुराधर्षःशुचेरिवशुचिःसदा ॥ शंकरस्येवसिद्धीशोविष्णोरिवसदाश्रयः ॥ २२ ॥ बहुनाकिमिहोक्तेनरहस्यंशृणुगौतम ॥ निर्वाणफलदोमन्त्रःकिमन्यैर्बहुजल्पितैः ॥ २३ ॥ इतिश्रीदेवर्षिनारदप्रोक्तेगौतमीयतन्त्रेप्रथमोऽध्यायः ॥ १ ॥ ॥छ॥ ॥छ॥

॥ गौतमउवाच ॥ समस्तवेदतत्त्वज्ञसर्वागमविशारद ॥ अधुनाब्रुहिमेब्रह्मन्मंत्रराजंशिवोदितम् ॥ १ ॥ ॥ नारदउवाच ॥ अधुनासम्प्रवक्ष्यामिविधानंमुनिनिर्गतम् ॥ यावन्मन्त्रऋषिछन्दोदेवतादीन्यनुक्रमात् ॥ २ ॥ स्वांताक्षरंसमुद्धृत्यत्रयोदशस्वरान्वितम् ॥ पार्श्वंतुर्यस्व

षिछन्दोदेवतादीन्यनुक्रमात् ॥ २ ॥ स्वांताक्षरंसमुद्धृत्यत्रयादशस्वरान्वितम् ॥ पार्श्वतुर्यस्व

रयुतंछान्तंधांतंतथाव्हयम् ॥ ३ ॥ अमृताक्षरमुद्धृत्यचैकतोमांसयुग्मकम् ॥ यतुर्यमुखवृत्ते
नपवनःस्वाहयान्वितः ॥ ४ ॥ दशाक्षरमनुःप्रोक्तोदृष्टादृष्टफलप्रदः ॥ बीजंशक्तिंचवक्ष्यामि
ब्रह्मविच्चपरात्परम् ॥ ५ ॥ ब्रह्मार्णमाययासार्धमांसार्णनादबिंदुकम् ॥ एतद्बीजंसमाख्यातं
कृष्णतत्वंपरात्परम् ॥ ६ ॥ शुक्रार्णममृतार्णेनमुखवृत्तेनसंयुतम् ॥ गगनंमुखवृत्तेनप्रोक्ताश
क्तिःपरात्परा ॥ ७ ॥ एषाशक्तिःपरासूक्ष्मानित्यसंवित्प्रदायिनी ॥ ईश्वरोजगतांबीजंशक्ति
र्गुणमयीत्वजा ॥ ८ ॥ परमात्मातथाबुद्धिर्वायुःकुण्डलिनीतिच ॥ चतुर्विधंबीजशक्तीसर्व
मंत्रेषुचिन्तयेत् ॥ ९ ॥ त्रितयंतत्वसामान्यंतदिदानींनिरूप्यते ॥ ईश्वरोजगतांबीजमाद्यंब्र
ह्मतदुच्यते ॥ १० ॥ तस्यमायासमाख्याताशक्तिर्गुणमयीतुया ॥ प्रकृतिःपुरुषश्चैवनित्यौ
कालश्चसत्तम ॥ ११ ॥ तत्वानिचेश्वरश्चैवब्रह्मेतिपञ्चमंस्मृतम् ॥ सर्गान्तःपुरुषश्चेतितुर्या
ख्याप्रकृतिःस्मृता ॥ १२ ॥ तत्वानिमांसरूपाणिकालश्चतत्वरूपकः ॥ ईश्वराख्योभवेन्नादो
बिंदुश्चैतन्यचिन्मयः ॥ १३ ॥ एतद्विज्ञानमात्रेणजीवन्मुक्तोमहींचरेत् ॥ नास्यकालकलापे
क्षानतीर्थायतनानिच ॥ १४ ॥ क्लिँकारादसृजद्विश्वमितिप्राहश्रुतेःशिरः ॥ लकारात्पृथिवी
जाताककाराज्जलसम्भवः ॥ १५ ॥ ईकाराद्वह्निरुत्पन्नोनादाद्वायुरजायत ॥ बिन्दोराका
शसंभूतिरितिभूतात्मकोमनुः ॥ १६ ॥ स्वशब्देनचक्षेत्रज्ञोहेतिचित्प्रकृतिःपरा ॥ तयोरैक्य

समुद्भूतिर्मुखवेष्टनवर्णकः ॥ १७ ॥ अतएवहिविश्वस्यलयःस्वाहार्णकोभवेत् ॥ गोपीतिप्रकृतिंविद्यात्जनस्तत्वसमूहकम् ॥ १८ ॥ अनयोराश्रयव्याप्तौकारणत्वेनचेश्वरः ॥ सान्द्रानंदंपरंज्योतिर्वल्लभेनचकथ्यते ॥१९॥ 'त्रिपादूर्ध्वउदैत्पुरुष'इत्याहुःप्रथमागिरः ॥ बीजोच्चारणमात्रेणाचित्स्वभावःप्रजायते ॥२०॥ वल्लभेनतुतद्दार्ढ्यंस्वाहयाज्ञानदाहनः ॥ इत्येवंकथितंतत्वंमुनेवैब्रह्मसम्मतम् ॥२१॥ यज्ज्ञानात्साधकश्रेष्ठोदिव्यानन्दःप्रवर्तते ॥ अथवागोपीप्रकृतिर्जनस्तदंशमंडलम् ॥२२॥ अनयोर्वल्लभःस्वामीकृष्णात्माईश्वरःस्मृतः ॥ कार्यकारणयोरीशःश्रुतिभिस्तेनगीयते ॥२३॥ अनेकजन्मशुद्धानांगोपीनांपतीरेवच ॥ नन्दनन्दनइत्युक्तस्त्रैलोक्यानंदवर्द्धनः ॥ २४ ॥ चिंतयेद्धिरजोमंत्रीसर्वसंपत्तिहेतवे ॥ दशानामपितत्वानांसाक्षीवेत्तातथाक्षरः ॥२५॥ दशाक्षरइतिख्यातोमंत्रराजःपरात्परः ॥ बीजपूर्वजपश्चास्यरहस्यंकथितंमुने ॥२६॥ लुप्तबीजस्वभावत्वाद्दशार्णइतिकथ्यते ॥ नारदोऽस्यमुनिःप्रोक्तश्छंदोविराडितिस्मृतम् ॥२७॥ श्रीकृष्णोदेवताचास्यदुर्गाधिष्ठातृदेवता ॥ महेश्वरमुखाज्ज्ञात्वायःसाक्षात्तपसामनुम् ॥२८॥ संसाधयतिशुद्धात्मासतस्यऋषिरीरितः ॥ गुरुत्वान्मस्तकेचास्यन्यासस्तुपरिकीर्तितः ॥ २९ ॥ सर्ववेदव्यापकत्वाद्विराडितिनिगद्यते ॥ सर्वेषामपितत्वानांछादनाच्छंदउच्यते ॥ ३० ॥ अक्षरत्वात्पदत्वाच्चमुखेछंदःप्रकीर्तितम् ॥ विनियोगोऽस्यमंत्रस्यपुरु

...सर्वेषामपितत्वानाछादना
च्छंदउच्यते ॥ ३० ॥ अक्षरत्वात्पदत्वाच्चमुखेछंदःप्रकीर्तितम् ॥ विनियोगोऽस्यमंत्रस्यपुरु

षार्थचतुष्टये ॥ ३१ ॥ ऋषिछंदोपरिज्ञानान्नमंत्रफलभाग्भवेत् ॥ दौर्बल्यंयातिमंत्राणांवि नियोगमजानता ॥ ३२ ॥ मंत्रन्यासमथोवक्ष्येदृष्टादृष्टफलप्रदम् ॥ प्रणवाभ्यांपुटंकृत्वान मोंतान्दशवर्णकान् ॥ ३३ ॥ दक्षांगुष्ठादिवामांतंन्यासःस्यात्सृष्टिरीरितः ॥ वामांगुष्ठादि दक्षांतंसंहृतिःपरिकीर्तितः ॥३४॥ उभयोःकरयोर्ज्येष्ठापूर्विकास्थितिरिष्यते ॥ संहृतिर्दोषसं घानांहारिणीपरिकीर्तिता ॥ ३५ ॥ विद्याप्रदाचसृष्ट्यंतावर्णिनांशुद्धचेतसाम् ॥ स्थित्यंता स्यात्गृहस्थानांत्रयंकाम्यानुरूपतः ॥ ३६ ॥ गृहस्थानांवनस्थानांस्थित्यंतंकाश्चिदिच्छति ॥ संहारांतोमुनीनांचविरक्तस्यचसर्वशः ॥ ३७ ॥ न्यासत्रयंसदाकार्यमशक्तैरेकमेवही ॥ वर्ण न्यासांस्तथामंत्रीदेहेचपरिविन्यसेत् ॥ ३८॥ हस्तमूलेकूर्परकेमणिबंधेऽगुलिमूलके ॥ अंगु ल्यग्रेचविन्यस्यपादयोरपिविन्यसेत् ॥३९॥ हस्तमुलादिसृष्टिःस्यात्मणिबंधात्स्थितिःस्मृ ता ॥ अंगुल्यग्रात्संहृतिःस्यात्स्थित्यंतंत्रितयंन्यसेत् ॥ ४० ॥ ततःकरांगयोर्न्यासस्तथैव परिकीर्तितः ॥ अचक्रायतथास्वाहाअंगुष्ठाभ्यांनमोवदेत् ॥ ४१ ॥ विचक्रायस्वाहेतित र्जनीभ्यांततोच्चरेत् ॥ सुचक्रायतथास्वाहामध्यमाभ्यांततोच्चरेत् ॥ ४२ ॥ त्रैलोक्यरक्षणच क्रायस्वाहेत्यनामिकेतथा ॥ असुरांतकचक्रायस्वाहाकनिष्ठयोर्नमः ॥ ४३ ॥ रुक्मिणीप्र कृतिर्वामासाक्षादमृतविग्रहा ॥ दक्षिणःपुरुषःप्रोक्तोज्योतिस्तुरीयविग्रहः ॥ ४४ ॥ संयोगा

त्करयोरेवंपरतत्वंप्रजायते ॥ अतएवसमस्तानांवस्तूनांशोधकंस्मृतम् ॥ ४५ ॥ पंचांगानि ततःकुर्यादंगमन्त्रेणदेशिकः ॥ पंचांगानिमनोर्यत्रतत्रनेतांविवर्जयेत् ॥ ४६ ॥ अचक्रायतथा स्वाहाहृदयायनमोवदेत् ॥ अंगुष्टरहितेनैवकराग्रेणहृदंस्पृशेत् ॥ ४७ ॥ विचक्रायतथास्वा हाशिरसेस्वाहेतिसंवदेत् ॥ शिरसिविन्यसेत्तद्वत्तथैवकरशाखया ॥ ४८ ॥ सुचक्रायतथास्वा हाशिखायैवषडुच्चरेत् ॥ तथाधोंगुष्ठमुष्ट्यातुशिखायांपरिविन्यसेत् ॥ ४९ ॥ त्रैलोक्यरक्षणा र्थायस्वाहेतिकवचायहुम् ॥ हस्ताभ्यांशिरआरभ्यपादांतंसंस्पृशेत्यतिः ॥ ५० ॥ असुरांत कचक्रायस्वाहास्त्रायफडुच्चरेत् ॥ ऊर्ध्वाधस्तालतितयंछोटिकाभिर्दिशोदश ॥ ५१ ॥ बंधये न्मुनिशार्दूलनित्यन्यासोऽयमीरितः ॥ ईज्यमानोहृदात्मायंहृदयेस्याच्चिदात्मकः ॥ ५२ ॥ क्रिं यतेतत्परात्माचहृन्मंत्रेणचदेशिकैः ॥ सर्वांगादिगुणोत्तुंगसंविद्रूपेपरात्मनि ॥ ५३ ॥ क्रि यतेविषयाहारःशिरोमंत्रेणधीमता ॥ हृच्छिरोरूपचिद्धाममयताभावनादृढा ॥ ५४ ॥ क्रिय तेनिजदेहस्यशिखामंत्रेणसादरम् ॥ मंत्रात्मकस्यदेवस्यमंत्रव्याप्तेनतेजसा ॥ ५५ ॥ सर्व तोवर्ममंत्रेणक्रियतेन्याससंभृतिः ॥ यद्ददातिपरंज्ञानंसंविद्रूपेपरात्मनि ॥ ५६ ॥ हृदयादिम यंतेजःस्यादेतन्नेत्रसंज्ञकम् ॥ आध्यात्मकादिरूपंयत्साधकस्यविनाशयेत् ॥ ५७ ॥ अवि द्याजातमस्त्रंतत्परंधामसमीरितम् ॥ गौतमउवाच ॥ ब्रह्मन्ब्रह्मविदांश्रेष्ठसर्वभूतहितेरत ॥

यतजःस्यादितन्नसंज्ञकम् ॥ [illegible] नाशयेत् ॥ ५७ ॥ अवि
द्याजातमस्त्रंतत्परंधामसमीरितम् ॥ गौतमउवाच ॥ ब्रह्मन्ब्रह्मविदांश्रेष्ठसर्वभूतहितेरत ॥

॥ ५८ ॥ त्वमेवकृष्णदेवस्यअंतर्यामीनिरामयः ॥ ५९ ॥ अविद्यादोषनिर्मुक्तःसमस्तव्रतसं
युतः ॥ सर्वलोकैककगमकःसर्वलोकैकतत्ववित् ॥ ६० ॥ सर्वानुभावसाक्षीत्वंसर्वलोकनम
स्कृतः ॥ इदानींश्रोतुमिछामिमंत्रराजंपरात्परम् ॥ ६१ ॥ अष्टादशार्णोमंत्रस्तुगुह्याद्गुह्यतरः
स्मृतः ॥ तंमंत्रंश्रोतुमिच्छामियदियोऽग्योस्मिसत्तम ॥६२॥ भवार्णवनिमग्नंमांत्वमुद्धर्तुमि
हार्हसि ॥ इत्यादिस्तुतिभिःस्तुत्वाप्रणम्यचपुनःपुनः ॥ ६३ ॥ पार्श्वमासाद्यतद्भक्तमतिरा
सीन्मुनीश्वरः ॥ ६४ ॥ नारदउवाच ॥ साधुपृष्टंत्वयाब्रह्मन्मयापिब्रह्मणःश्रुतः ॥ मंत्रराजो
मुनिश्रेष्ठसर्ववेदागमानुगः ॥ ६५ ॥ ततःप्रभृतिविप्रर्षेहारितामाप्तवानहम् ॥ तवस्नेहात्प्रव
क्ष्यामियंतस्त्वंपुरुषप्रियः ॥ ६६ ॥ क्लिँकारंपूर्वमुच्चार्यकृष्णंतुर्यपदान्वितं ॥ गोविंदंचत
थाचोक्त्वादशार्णंचतथोच्चरेत् ॥ ६७ ॥ भक्त्यातेप्रणिपत्त्याचकथितोमंत्रनायकः ॥ गुह्या
द्गुह्यतरोह्येषवांछाचिंतामणिःस्मृतः ॥६८॥ शौनकाद्याश्चमुनयस्तथान्येदेवमुख्यकाः ॥ मंत्र
राजपरिज्ञानात्सद्यस्तत्साम्यतांगताः ॥ ६९ ॥ कृष्शब्दस्यसत्वार्थोणश्चानंदस्वरूपकः ॥
सुखरूपोभवेदात्माभावानंदमयत्वतः ॥ ७० ॥ गोशब्देनज्ञानमुक्तंतेनविन्देततत्पदं ॥ गो
शब्दाद्वेदइयुक्तस्तेनवालभतेविभुं ॥ ७१ ॥ एवंतेकथितामंत्रवासनामुनिसत्तम ॥ एत
ज्ज्ञानानुभावेनजीवन्मुक्तोनचान्यथा ॥ ७२ ॥ सर्वेषांमंत्रराशीनांमुख्योऽयंवरदोमनुः ॥ पुरा

णतीर्थानिसर्वाणिखातानितेनधीमता ॥ ७३ ॥ सिद्धक्षेत्राणिसर्वाणिसम्यक्कृतानितेनवै ॥ सकृदुच्चरणेनास्यसत्यमेवनचान्यथा ॥ ७४ ॥ किमन्येनबहूक्तेनस्मरणाच्चास्यमंत्रवित् ॥ जीवन्मुक्तोनसंदेहोविष्णुरेवनसंशयः ॥७५॥ नारदोऽस्यमुनिःप्रोक्तोगायत्रीछंदउच्यते ॥ कृष्णःप्रकृतिरेतस्यदुर्गाधिष्ठातृदेवता ॥ ७६ ॥ वासुदेवःसंकर्षणःप्रद्युम्नश्चानिरुद्धकः ॥ नारायणइतिख्यातःपदपंचात्मकःपरः ॥ ७७ ॥ अक्षरार्थस्तुकथितःपदस्यार्थइतीरितः ॥ तस्माद्विज्ञायवैमंत्रीपुरुषार्थचतुष्टयं ॥ ७८ ॥ लभतेनात्रसंदेहःसत्यंसत्यंहिगौनम ॥ बीजशक्तीपुराप्रोक्तेविनियोगश्चपूर्ववत् ॥ ७९ ॥ पंचागांनिमनोरस्यपदपंचकयोजनात् ॥ ब्रह्मरंध्रेभ्रुवोर्मध्येजिव्हाकूपेतथापुनः ॥ ८८ ॥ कंठदेशेत्दृदितथानाभौलिंगेचमूलके ॥ घ्राणद्वयेचक्षुषोश्चकर्णयोर्विन्यसेदिति ॥ ८१ ॥ जानुयुग्मेपदद्वंद्वेमन्त्रवर्णान्क्रमान्न्यसेत् ॥ ब्रह्मरंध्रेपुनःसर्वमंत्रव्यापकमाचरेत् ॥ ८२ ॥ मूर्ध्निवक्त्रेत्दृदिनाभौमूलेचपदपंचकं ॥ रोहावरोहतोन्यस्यकेशवाद्यानथोन्यसेत् ॥ ८३ ॥ वर्णन्यासंपुराकृत्वाकेशवाभ्यांस्तुतान्न्यसेत् ॥ भूतशुद्धिंलिपिन्यासंविनायस्तुप्रपूजयेत् ॥८४॥ विपरीतफलंदद्यादभक्त्यापूजनंयथा ॥ मातृकाद्विविधाप्रोक्तापराचाप्यपरातथा ॥ ८५ ॥ सुषुप्तौतुपरातस्याअपराबाह्यदेशके ॥ अथांतर्मातृकान्यासोमूलाधारेचतुर्दले ॥ ८६ ॥ स्वर्णाभेवशषसचतुर्वर्णसमीरितः ॥ षड्दलेवैद्युतानि

तृकान्यासोमूलाधारेचतुर्दले ॥ ८६ ॥ स्वर्णाभेवशषसचतुर्वर्णसमीरितः ॥ षड्दलेवैद्युतानि



भेस्वाधिष्ठानेऽनलत्विषि ॥ ८७ ॥ वभमैर्यरलैर्युक्तेवर्णैःषड्भिरलंकृते ॥ मणिपूरेदशदलेनी लजीमूतसत्विषि ॥८८ ॥ डादिफांतदलैर्युक्तेबिंदूद्भासितमस्तके ॥ अनाहतेद्वादशारेप्रवाल रुचिसन्निभे ॥ ८९ ॥ कादिठांतदलैर्युक्तेयोगिनांहृदयंगमे ॥ विशुद्धेषोडशदलेधूम्राभेस्व रभूषिते ॥ ९० ॥ आज्ञाचक्रेचशुभ्राभेहक्षद्विदलशोभिते ॥ सहास्रारेमहापद्मेबिन्दुनादद्व यान्विते ॥ ९१ ॥ अकथादित्रिरेखात्महलक्षत्र्यस्रमध्यगे ॥ तन्मध्येपरबिंदुंचसृष्टिस्थि तिलयात्मकं ॥९२ ॥ एवंसमाहितमनाध्यायेन्न्यासोऽयमांतरः ॥ मूलादिब्रह्मरंध्रांतंविद्यांध्या येच्चिदात्मिकां ॥ ९३ ॥ बिंदोश्च्युतसुधासारैस्तर्पयन्मातृकांन्यसेत् ॥ एकैकंवर्णमुच्चा र्यमूलाधाराद्भ्रुवोंतिकम् ॥ नमोंतइतिन्यासोऽयमांतरःसंप्रकीर्तितः ॥९४॥ बाह्यंवैमातृका न्यासंश्रृणुष्वावहितोमम ॥ यच्छ्रुत्वयान्यसन्विद्वान्वागीशत्वंलभेदिह ॥९५॥ ललाटमुख वृत्ताक्षिश्रुतिघ्राणेषुगंडयोः ॥ ओष्ठदंतोत्तमांगास्यदोःपत्संध्यग्रकेषुच ॥ ९६ ॥ पार्श्वयोः पृष्ठतोनाभौजठरेहृदयेंशके ॥ ककुद्यंसेचहृत्पूर्वंपाणिपादयुगेतथा ॥ ९७ ॥ जठराननयो र्न्यसेन्मातृकार्णान्यथाक्रमं ॥ चतुर्धामातृकाप्रोक्ताकेवलाबिंदुसंयुता ॥ ९८ ॥ सविसर्गासो भयाचरहस्यमपिकथ्यते ॥ विद्याकरीकेवलाचसोभयाभक्तिदायिका ॥ ९९ ॥ सविसर्गापु त्रदाचसबिंदुर्मोक्षदायिनी ॥ केशवादिततोन्यासंकुर्यात्साधकसत्तमः ॥ १०० ॥ ऋषिःप्रजा

पतिश्छंदोगायत्रीदेवतापुनः ॥ अर्द्धलक्ष्मीहरिःप्रोक्तःश्रीबीजेनषडंगकं ॥ १०१ ॥ करशुद्धि विधानंचविधायध्यानमाचरेत् ॥ उद्यदादित्यसंकाशंतप्तजांबूनदप्रभं ॥ २ ॥ कमला वसुधाशोभिपार्श्वद्वंद्वंपरात्परम् ॥ विचित्ररत्नविहितनानालंकारशोभितम् ॥ ३ ॥ पीतवस्त्रप रीधानंशंखकौमोदकीकरं ॥ वामतश्चक्रपद्मेचध्यात्वेवंविन्यसेत्ततः ॥ ४ ॥ प्रणवंपूर्वमुच्चार्य श्रीबीजंतदनंतरं ॥ मातृकार्णास्ततोन्यसेद्वक्ष्येहंतत्प्रकारकं ॥ ५ ॥ केशवंविन्यसेत्कीर्त्याकां त्यानारायणंन्यसेत् ॥ माधवंतुष्टिसहितंगोविंदंपुष्टिसंयुतं ॥ ६ ॥ धृत्याविष्णुंशांतियुक्तंमधुसू दनमेवच ॥ त्रिविक्रमंचक्रिययावामनंदययान्यसेत् ॥ ७ ॥ श्रीधरंमेधयान्यस्यहृषीकेशंच हर्षया ॥ श्रद्धयापद्मनाभंचलज्जादामोदरौततः ॥ ८ ॥ वासुदेवंततोलक्ष्म्यासंकर्षणंसरस्व तीं ॥ प्रद्युम्नंविन्यसेत्प्रीत्यारत्याचैवानिरुद्धकं ॥ ९ ॥ चक्रिणंजययान्यस्यदुर्गयागदिनंतथा ॥ शार्ङ्गिणंप्रभयासार्द्धंखड्गिनंसत्ययासह ॥ १० ॥ शंखिनंचंडयासार्द्धंवाण्याचहलिनंन्यसे त् ॥ विलासिन्यामुसलिनंशूलिनंविजयायुतं ॥ ११ ॥ पाशिनंविरजायुक्तंविश्वयांकुशिनंन्यसे- त् ॥ मुकुंदंविनयायुक्तंसुनंदानंददौन्यसेत् ॥ १२ ॥ सहस्मृत्यानंदनंचनरंचऋद्धिसंयुतं ॥ न रकजित्समृद्ध्याचशुद्ध्यासहहरिंन्यसेत् ॥ १३ ॥ बुद्ध्याकृष्णंभक्त्यासत्यंसात्वतंसातिसंयुतं ॥ शौरिक्षमेशूररमेतथैवोमाजनार्दनौ ॥ १४ ॥ क्लेदिन्याभूधरंविश्वमूर्तिंक्लिन्नायुतंन्यसेत् ॥ वैकुं

रकाजित्समृद्धयाचशुद्धयासहहरिंन्यसेत् ॥ १३ ॥ बुद्धयाकृष्णंभक्त्यासत्यंसात्वतंसातिसंयुतं ॥

शौरिक्षमेशूररमेतथैवोमाजनार्दनौ ॥ १४ ॥ क्लेदिन्याभूधरंविश्वमूर्तिंक्लिन्नायुतंन्यसेत् ॥ वैकुं



ठवसुदेन्यस्यवसुधापुरुषोत्तमौ ॥ १५ ॥ बलिनंपरयायुक्तंबलानुजपरायणं ॥ बालंचसूक्ष्म यायुक्तंवृषघ्नंसंध्ययायुतं ॥ १६ ॥ वृषंचप्रज्ञयायुक्तंहंसंचैवप्रभायुतं ॥ वराहंनिशयायुक्तंविम लंमेधयासह ॥ १७ ॥ नृसिंहंविद्ययायुक्तंविन्यसेत्साधकोत्तमः ॥ एवमंगेषुविन्यस्यध्या त्वापूर्वंसमाहितः ॥ १८ ॥ भक्त्यातुपूजयेद्देवंसोऽभिष्टंफलमाप्नुयात् ॥ केशवादिरयंन्यासो न्यासमात्रेणदेहिनां ॥ १९ ॥ अच्युतत्वंददात्येवसत्यंसत्यंनसंशयः ॥ केशवाद्याइमेश्यामाः सर्वेनारायणाःस्मृताः ॥ २० ॥ शंखचक्रगदापद्मलसद्भुजचतुष्टयाः ॥ पीतांबरधरानित्यंना नाभरणभूषिताः ॥ २१ ॥ साचगोपीसगोपश्चसचक्रंचसपंचकम् ॥ सगदश्चसशंखश्चदं क्षिणोर्ध्वकरक्रमात् ॥ २२ ॥ ओंनमोर्णसमुच्चार्यनारायणमनुंवदेत् ॥ प्राणात्मानंतथोच्चार्यके शवायइतिस्मरेत् ॥ २३ ॥ कीर्त्याचमनसायुक्तंइत्यादिन्यासमाचरेत् ॥ मुमुक्षुवश्चयतयश्चरे युर्न्यासमुत्तमं ॥ २४ ॥ एवंवाविन्यसेन्न्यासंलक्ष्मीबीजपुरस्सरं ॥ स्मृतिंधृतिंमहालक्ष्मींप्रा प्यतेहरितांव्रजेत् ॥ २५ ॥ वागुराद्यंन्यसेद्वाथवागीशत्वमवाप्नुयात् ॥ यद्यदाद्यंन्यसेन्न्यासं तद्वीजैरंगकल्पनं ॥ २६ ॥ तत्वन्यासंततःकुर्यात्साधकःसिद्धिहेतवे ॥ कृतेनयेनश्रीदेवरूप तामेवयात्यसौ ॥ २७ ॥ मादिकांतानथार्णांश्चबीजान्येकैकशोच्चरेत् ॥ नमःपरायेत्युच्चार्य ततस्तत्वात्मनेनमः ॥ २८ ॥ जीवप्राणद्वयंचोक्त्वासर्वांगेषुप्रविन्यसेत् ॥ ततोत्हृदयमध्येच

तत्वत्रयंचविन्यसेत् ॥ २९ ॥ वंबीजंमतितत्वंचअनहंकारमेवच ॥ यंबीजंचमनस्तत्वमित्येवांतितयंन्यसेत् ॥ ३० ॥ नंबीजंशब्दतत्वंचन्यसेन्मौलौततःपरं ॥-धंबीजंस्पर्शतत्वंचविन्यसेद्दाननेसुधीः ॥ ३१ ॥ दंबीजंरूपतत्वंचह्रदयेविन्यसेत्ततः ॥ थंबीजंरसतत्वंचाविन्यसेदथगुह्यके ॥ ३२ ॥ तंबीजंगंधतत्वंचपादयोरथविन्यसेत् ॥ णंबीजंश्रोत्रतत्वंचश्रोत्रयोरेवविन्यसेत् ॥ ३३ ॥ ढंबीजंत्वक्तत्वंचविन्यसेत्त्वाचिसाधकः ॥ डंबीजंनेत्रतत्वंचनेत्रयोरथविन्यसेत् ॥ ३४ ॥ ठंबीजंरसनातत्वंरसनायामथोन्यसेत् ॥ टंबीजंघ्राणतत्वंचनासिकायांप्रविन्यसेत् ॥ ३५ ॥ झंबीजंवाक्तत्वंचविन्यसेद्वाचिसाधकः ॥ ऋंबीजंपाणितत्वंचपारावारेप्रविन्यसेत् ॥ ३६ ॥ जंबीजंपादतत्वंचपादयोरेवविन्यसेत् ॥ छंबीजंपायुतत्वंचपायौन्यसेत्समाहितः ॥ ३७ ॥ चंबीजंलिंगतत्वंचविन्यसेदथसंध्यके ॥ टंबीजंतत्वमाकाशंपुनमौंलौप्रविन्यसेत् ॥ ३८ ॥ घंबीजंवायुतत्वंचवदनेविन्यसेत्पुनः ॥ गंबीजंतेजस्तत्वंचह्रदयेविन्यसेत्सुधीः ॥ ३९ ॥ खंबीजंजलतत्वंचततःशिश्नेप्रविन्यसेत् ॥ कंबीजंपृथिवीतत्वंविन्यसेत्पादयोःपुनः ॥ ४० ॥ शंबीजंह्रत्पुंडरीकंतत्वंह्रदिचविन्यसेत् ॥ हंबीजंसूर्यमंडलतत्वंह्रदिचविन्यसेत् ॥४१॥ संबीजंचंद्रमंडलतत्वंतत्रैवचप्रविन्यसेत् ॥ रंबीजंवान्हिमंडलतत्वंतत्रैवविन्यसेत् ॥ ४२ ॥ षंबीजंपरमेष्ठितत्वंवासुदेवंचमूर्द्धनि ॥ यंबीजमथपूंस्तत्वंसंकर्ष

लंतत्रैवविन्यसेत् ॥ ४२ ॥ षंबीजंपरमेष्ठितत्वंवासुदेवंचमूर्द्धनि ॥ यंबीजमथपूंस्तत्वंसंकर्ष

णमथोमुखे ॥ ४३ ॥ लंबीजंविश्वतत्वंचप्रद्युम्नंहृदिविन्यसेत् ॥ बंबीजंप्रकृतितत्वमनिरु
द्धमुपस्थके ॥ ४४ ॥ लंबीजंसर्वतत्वंचपादौनारायणंन्यसेत् ॥ क्ष्रौंबीजंकोपतत्वंचनृसिंहं
सर्वगात्रके ॥ ४५ ॥ एवंतत्वानिविन्यस्यप्राणायामंसमाचरेत् ॥ दशाक्षरेणचेत्तत्रअष्टाविंश
तिरेचयेत् ॥ ४६ ॥ पूरयेद्वामयातद्वद्धारयेत्तत्प्रमाणतः ॥ प्राणायामोभवेदेकोरेचपूरककुंभ
कैः ॥ ४७ ॥ अष्टादशार्णेनचेत्तत्रद्वादशैवंसमाचरेत् ॥ एकेनरेचयेत्कामबीजेनैवंपृथक्पृथ
क् ॥ ४८ ॥ पूरयेत्सप्तसप्तेनविंशत्यातेनधारयेत् ॥ सर्वेषुकृष्णमंत्रेषुबीजेनानेनकारयेत् ॥
॥४९॥ अशक्तौकथितश्चैवंशक्तौचयोगिनांमतं ॥ अथवासर्वमंत्रेषुवर्णानुक्रमतोजपन् ॥५०॥
प्राणायामंचरेन्मंत्रीरेचपूरककुंभकैः ॥ मंत्रप्राणायामःप्रोक्तोयौगिकंकथयामिते ॥ ५१ ॥
रेचयेद्दक्षयाविद्वान्मात्राषोडशकेनच ॥ द्वात्रिंशन्मात्रयापूर्यचतुःषष्ठ्यातुधारयेत् ॥ ५२ ॥
एकश्वासश्चैकमात्रोमात्रायानियमोमतः ॥ वामजानुनितद्धस्तभ्रमणंयावताभवेत् ॥ ५३ ॥
कालेनमात्रासाज्ञेयामुनिभिर्वेदपारगैः ॥ प्राणायामोद्विधाप्रोक्तःसगर्भश्चनिगर्भकः ॥ ५४ ॥
सगर्भोमंत्रजाप्येनप्राणायामोमतोबुधैः ॥ निगर्भश्चप्राणायामोमात्रायाःसंख्ययाभवेत् ॥५५॥
प्राणायामात्परंतत्वंप्राणायामात्परंतपः ॥ प्राणायामात्परंज्ञानंप्राणायामात्परंपदं ॥ ५६ ॥
प्राणायामात्परोयोगःप्राणायामात्परंधनं ॥ नास्तिनास्तिपुनर्नास्तिकथितंतवसुव्रत ॥५७॥

वत्सराभ्यासयोगेनब्रह्मसाक्षाद्भवेद्ध्रुवं ॥ चैतन्यावरणंयद्यत्क्षीयतेनात्रसंशयः ॥ ५८ ॥ प्राणायामंविनामुक्तिमार्गोनास्तिमयोदितः ॥प्राणायामंविनायद्यत्साधनंनिष्फलंभवेत् ॥५९॥ प्राणायामेनमुनयःसिद्धिमायांतिनान्यथा ॥ प्राणायामपरोयोगीनयोगीशिवएवसः ॥६०॥ गमनागमनंवायोःप्राणस्यधारणंतथा ॥ प्राणायामइतिप्रोक्तोयोगशास्त्रविशारदैः ॥६१॥ प्राणोवायुरितिख्यातआयामस्तन्निरोधनं ॥ प्राणायामइतिप्रोक्तोयोगिनांयोगसाधनम् ॥६२॥ आद्यंतयोर्विधीयंतेनासिकापुटचारिणः ॥ रेचयेद्दक्षयानासापूरयेद्वामतस्ततः ॥ ६३ ॥द्वात्रिंशदभ्यसेन्मंत्रंप्राणायामःसउच्यते ॥ ब्रह्महत्यासुरापानमगम्यागमनंतथा ॥ ६४ ॥ सर्वमाशुदहत्येवप्राणायामेनवैद्विजः ॥ भ्रूणहत्यादिपापानिनाशयेन्मासमात्रतः ॥ ६५ ॥ प्रातःसायंचरेन्नित्यंषोडशप्राणसंयमान् ॥ नाशयेत्सर्वपापानितूलराशिमिवानलः ॥ ६६ ॥ सर्वेषामेवपापानांप्रायश्चित्तमिदंस्मृतं ॥ स्वदेहस्थंयथासर्पश्चर्मोत्सृज्यनिरामयः ॥ ६७ ॥ प्राणायामात्तथागच्छेदविद्याकामकर्मजा ॥ अथवाकिंबहूक्तेनश्रुणुगौतमतत्वतः ॥ ६८ ॥ प्राणायामान्नेहपरंयोगिनांमुक्तिहेतवे ॥ प्राणायामंविधायेत्थंदेहेपीठंप्रविन्यसेत् ॥ ७९ ॥ आधारशक्तिंप्रकृतिंकूर्मंसूकरमेवच ॥ पृथिवींक्षीरसिंधुंचश्वेतद्वीपंचमध्यतः ॥ ७० ॥ तन्मध्येरत्नगेहंचसर्वाभीष्टफलप्रदं ॥ गेहमध्येकल्पवृक्षंसर्वरत्नमहोज्वलं ॥ ७१ ॥ द

पंचमध्यतः ॥ ७० ॥
तन्मध्येरत्नगेहंचसर्वाभीष्टफलप्रदं ॥ गेहमध्येकल्पवृक्षंसर्वरत्नमहोज्वलं ॥ ७१ ॥ द

क्षांसेदक्षिणकटौतथावामद्वयेपुनः ॥ धर्मंज्ञानंचवैराग्यंविन्यसेदैश्वरंतथा ॥ ७२ ॥ मुख
पार्श्वेनाभिपार्श्वेतानपूर्वांस्तुविन्यसेत् ॥ विन्यस्यैवंपुनर्हृदिपद्मंविश्वमयंन्यसेत् ॥ ७३ ॥
प्रकृत्यष्टलसत्पत्रंविकारमयकेशरं ॥ तन्मध्येविन्यसेन्मंत्रीपंचाशद्वर्णकर्णिकां ॥ ७४ ॥ प्र
णवस्यत्रिभिर्वर्णैर्विन्यसेन्मंडलत्रयं ॥ कलाभिःसहितंतद्वद्दशद्वादशषोडशैः ॥ ७४ ॥ अका
रोकारमकाराःप्रणवांशोद्भवाक्षराः ॥ ब्रह्माविष्णुमहेशाख्याःसमष्टिव्यष्टिरूपकाः ॥ ७६ ॥स
मष्ट्याकेवलंब्रह्मसच्चिदानंदलक्षणं ॥ सबीजपूर्वकाँस्तत्रसत्वादीनथविन्यसेत् ॥ ७७ ॥ त
दंशेनैवमतिमान्न्यसेदात्मचतुष्टयं ॥ आत्मापरात्माऽपरात्मज्ञानात्मानश्चतेमताः ॥ ७८ ॥
आत्मनोजागरेस्थूलेविश्वात्माविश्वरूपकः ॥ नामाद्यबीजसहितंत्वन्मध्येचव्यवस्थिताः ॥
॥७९॥ अतएवत्वहृदिन्यसेद्वाग्वृत्तिर्हृदयेस्थिता ॥ अंतरंगतयाचायमंतरात्माहृदंतरे ॥ ८० ॥
मनोमयस्तैजसाख्योह्यंतरिंद्रियवृत्तिधृक् ॥ अतएवमुनेचायमंतरात्मेतिकीर्तितः ॥ ८१ ॥ अं
बीजंचास्यगदितंतत्पूर्वंविन्यसेत्सुधीः ॥ परमात्मासुषुप्त्याख्योमनोव्यावृत्तिहारकः ॥ ८२ ॥
विनयेचेंद्रियैस्तत्रस्वसुखःकेवलेस्थितः ॥ पंबीजात्परमात्मानंयजेत्सर्वार्थसिद्धये ॥ ८३ ॥ सं
कर्षणःश्वानिरुद्धःप्रद्युम्नश्चेतितत्त्रयं ॥ ज्ञानात्मासौवासुदेवःस्वयंभूःप्राज्ञरूपकः ॥ ८४ ॥
वृत्तितयेविलीनेतुकेवलंसुखचित्कलः ॥ सुखात्मावासुदेवोऽसौचित्कलाप्रकृतिःपरा ॥ ८५॥

बीजंतस्यप्रवक्ष्यामिकेवलंसुखचिन्मयं ॥ व्योमाक्षरंवन्हिसंस्थंतुर्यस्वरसमन्वितं ॥ ८६ ॥ नादबिंदुकलायुक्तंबीजंतत्सुखचिन्मयं ॥ वेदमयोद्धृतंसारंसर्वकारणकारणं ॥ ८७ ॥ केशरेष्वष्टशक्तीश्चअष्टप्रकृतिरूपिणीः ॥ मध्येशक्तिःपराख्याचचिदानंदस्वरूपिणी ॥ ८८ ॥ विमलाकर्षिणीज्ञानाक्रियायोगात्रशक्तयः ॥ प्रव्हीसत्यातथेशानानुग्रहानवमीयुता ॥ ८९ ॥ नवशक्तीःप्रविन्यस्यन्यसेत्ततमहामनुं ॥ नमोभगवतेप्रोक्त्वासर्वभूतात्मनेपदं ॥ ९० ॥ वासुदेवपदंङेंतंसर्वात्मयोगसंयुतं ॥ सर्वात्मसंयोगयोगपद्मपीठात्मनेनमः ॥ ९१ ॥ अयंपीठमनुःप्रोक्तःसर्वभूतात्मकःपरः ॥ शामलंकोमलंधामतत्रोपरिविचिंतयेत् ॥ ९२ ॥ इतिश्रीनारदप्रोक्तेगौतमीयतन्त्रेद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

नारदउवाच ॥ अथाखिलंन्यासजालंश्रुणुष्वावहितोऽनघ ॥ नित्यन्यासाःपुराप्रोक्तायैर्विनाविफलाभवेत् ॥ १ ॥ मंत्रतन्त्रार्चनासर्वाप्रकारेणाप्यनुष्ठिता ॥ फलाधिक्येच्छयान्यासान्समस्तपुरुषार्थदान् ॥ २ ॥ शृणुवक्ष्यामिविप्रेन्द्रयेनविष्णुमयोभवेत् ॥ स्वरषट्कंयथापूर्वंपश्चाच्चस्वरषट्ककं ॥ ३ ॥ मूर्तिद्वादशकंतद्वद्वासुदेवेनसंयुतं ॥ कपालेविन्यसेद्धाताकेशवंसुसमाहितः ॥ ४ ॥ नारायणंचजठरेअर्यमासंयुतंन्यसेत् ॥ हृदयेमाधवंचैवमित्रेणसहविन्यसेत ॥ ५ ॥ गोविंदंगलकूपेचवरुणेनप्रविन्यसेत् ॥ विष्णुंचदक्षिणेपार्श्वेअंशुनासहविन्यसेत्

माहितः ॥ ४ ॥ नारायणंचजठरेअर्यम्णासहितंन्यसेत् ॥ [illegible]माधवंचैवमित्रेणसहाविन्यसे
त् ॥ ५ ॥ गोविंदंगलकूपेचवरुणेनप्रविन्यसेत् ॥ विष्णुंचदक्षिणेपार्श्वेअंशुनासहविन्यसेत्



॥ ६ ॥ पृष्ठदेशेचप्रद्युम्नंत्वष्ट्रासहप्रविन्यसेत् ॥ ककुद्देशेऽनिरुद्धंचाविष्णुनासहविन्यसेत् ॥
॥७॥ द्वादशाक्षरंमंत्रवरंविन्यसेद्ब्रह्मरंध्रके ॥ भुजांतेदक्षिणेन्यसेद्भगेनमधुसूदनं ॥ ८ ॥
पद्मनाभंदक्षगलेन्यसेद्विवस्वतायुतं ॥ दामोदरमथेंद्रेणवामपार्श्वेन्यसेत्सुधीः ॥ ९ ॥ भुजां
तेवासुदेवंचपूष्णासहप्रविन्यसेत् ॥ संकर्षणंवामगलेपर्जन्येनचविन्यसेत् ॥ १० ॥ वासुदे
वोभवेत्साक्षाद्व्यापितस्तस्यतेजसा ॥ मात्रात्रिकंसमुद्धृत्यनमोभगवतेलिखेत् ॥ ११॥ वासु
देवंचतुर्थ्यंतंमंत्रोऽयंसुरपादपः ॥ अस्यविज्ञानमात्रेणवासुदेवःप्रजायते ॥ १२ ॥ मनुसंपुटि
तांन्यसेन्मातृकांविश्वमातरं ॥ तेनैवमंत्रसिद्धिःस्याद्दोषसंघातनाशनात् ॥ १३ ॥ दशार्णगो
लकंन्यासंवक्ष्येसंभूतिदायकं ॥ मंत्रंदशावृत्तिमयंगोपनीयंप्रयत्नतः ॥ १४ ॥ आधारेचध्व
जेनाभौहृदयेगलमुखांसके ॥ ऊरुद्वयेकंधरायांनाभ्यांकुक्षिस्तनद्वये ॥ १५॥ पार्श्वद्वयेतथा
श्रोण्योर्मस्तकास्थेचनेत्रयोः ॥ कर्णनासिकयोस्तद्वत्कपोलेकरसंधिषु ॥ १६ ॥ तदग्रे
पादयोःसंधीतदग्रेष्वपिचादरात् ॥ मंत्रकेतत्रप्राच्यादिदिशासुव्यापकंन्यसेत् ॥१७॥ दोष्णो
स्तथाचोरुद्वयेशिरोऽक्षिमुखदेशके ॥ कंठेहृत्तुंदकंचाधोजानु(१०)प्रपत्सुविन्यसेत् ॥१८॥
श्रोत्रगंडांतवक्षोजपार्श्वेष्वेवहिस्फिच्युरौ ॥ जानुजंघांघ्रियुगुले(१०)इत्थंवर्णान्प्रविन्यसेत्
॥ १९ ॥ विभूतिपंजरन्यासंसर्वभूतिप्रवर्तकं ॥ दशतत्वंततोन्यसेद्दशार्णंशीघ्रसिद्धये ॥

॥ २० ॥ पृथिव्यप्तेजोमरुद्दियदितिपंचतत्वकं ॥ अहंकारोमहत्तत्वंतथाप्रकृतिपूरुषौ॥२१॥ परमात्माचतत्वानियथावदवधारय ॥ पादांबुहृदयेवक्त्रेमूर्ध्निपंचन्यसेत्ततः ॥ २२ ॥ हृदिहृयंतयंन्याद्ध्यासर्वांगेविन्यसेत्सुधीः ॥ मस्तकादिततोन्यसेद्यावत्यादावसानकं ॥ २३ ॥ अयंन्यासोगुप्ततमोमंत्राणांशिघ्रसिद्धिदः॥ कार्योऽन्येष्वपिगोपालमंत्रेष्वापिविशालधीः ॥२४॥ दशाक्षरस्यवर्णाश्वसंहारक्रमतोन्यसेत् ॥ सृष्टिन्यासेमनोरस्यवर्णान्विपरितान्न्यसेत्॥२५॥ एकैकाक्षरमुच्चार्यनमोंतंतुततःपठेत् ॥ परायेतिचतत्वानितदंतेनमसासह ॥ २६ ॥ मनसाविन्येसन्न्यासान्पुष्पेनैवतथामुने ॥ अंगुष्ठानामिकाभ्यांवाअन्यथाविफलंभवेत् ॥ ॥ २७ ॥ इतीश्रीदेवर्षिनारदप्रोक्तेगौतमीयतन्त्रेतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥

॥ नारदउवाच ॥ अथवृंदावनंध्यायेत्सर्वदेवनमस्कृतं ॥ सर्वर्तुकुसुमोपेतंपतत्रिगणनादितं ॥ १ ॥ भ्रमद्भ्रमरझंकारभ्रमरीकृतदिङ्मुखं ॥ कालिंदीजलकल्लोलशीतलानिलसेवितं ॥ ॥ २ ॥ नानापुष्पलतावृद्धवृक्षखंडैश्वमंडितं ॥ समानोदितचंद्रार्कतेजोदीपेनदीपितं ॥ ३ ॥ कमलोत्पलकल्हारधूलिधूसरितांतरं ॥ शाखामृगगणाकीर्णनानामृगनिषेवितं ॥ ४ ॥ द्वात्रिंशद्वनसंवीतंवैकुंठादातिसौख्यदं ॥ पुरंदरमुखैर्देवैःसर्वतःसमधिष्ठितं ॥ ५ ॥ तन्मध्येरत्नभूमिंचसूर्यद्युतिसमप्रभां ॥ तत्रकल्पतरूद्यानंनियतंरत्नभूषणं ॥ ६ ॥ माणिक्यशिखरोल्ला

निशाहनसर्वातवकुठारोमध्यं ॥ पुरंदरमुखैर्देवैःसर्वतःसमधिष्ठितं ॥ ५ ॥ तन्मध्येरत्न
भूमिंचसूर्यद्युतिसमप्रभां ॥ तत्रकल्पतरूद्यानंनियतंरत्नभूषणं ॥ ६ ॥ माणिक्यशिखरोल्ला



सितन्मध्येमाणिमंडपं ॥ नानारत्नगणैश्चित्रंसर्वतेजोविराजितं ॥ ७ ॥ फलभारोल्लसच्चितंवि
तानैरुपशोभितं ॥ रत्नतोरणगोपूर्णमाणिक्यवेदिकान्वितं ॥ ८ ॥ दिव्यघंटासमायुक्तंमुक्ता
दामविराजितं ॥ कोटिसूर्यसमाभासंनिर्मुक्तंषट्तरंगकैः ॥ ९ ॥ बुभुक्षाचपिपासाचप्राणस्य
मनसस्तथा ॥ शोकमोहौशरीरस्यजरामृत्यूषडूर्मयः ॥ १० ॥ चतुर्द्वारसमायुक्तंकपाटाष्ट
कशोभितं ॥ रत्नप्रदीपावलिभिरन्तरेणोपशोभितं ॥ ११ ॥ तत्रकल्पतरुंध्यायेत्स्थविष्टंर
त्नवर्षणं ॥ सेवितंऋतुभिःसर्वैःसुधाशीकरवर्षिणं ॥ १२ ॥ गारुन्मणिलसत्पत्रंप्रवालरक्त
पल्लवं ॥ मुक्तारत्नप्रसविनंपद्मरागफलोज्वलं ॥ १३ ॥ संसारतापविच्छेदिकुशलच्छायमद्
भुतं ॥ तन्मूलेचिंतयेन्मंत्रीरत्नसिंहासनंशुभं ॥ १४ ॥ तत्रसूर्यसमाभासंपंकजंचाष्टपत्र
कं ॥ सर्वतत्वमयंतत्रचिंतयेज्जगदीश्वरं ॥ १५ ॥ संसारसागरोतीर्त्यैधर्मकामार्थसिद्धये ॥
इन्द्रनीलमणिमेघनवेन्दीवरसन्निभम् ॥ १६ ॥ पीतांबरधरंकृष्णंपुंडरीकनिभेक्षणं ॥ रत्नने
ताधरंरक्तपाणिपादतलंशुभं ॥१७ ॥ कौस्तुभोद्भासितोरस्कंनानारत्नाविभूषितं ॥ उद्दामवि
लसन्मुक्तारत्नहारविभूषितं ॥ १८ ॥ उद्दामविलसन्मुक्तारत्नहारोपशोभितम् ॥ नानारत्न
प्रभोद्भासिमुकुटंदीप्ततेजसं ॥ १९ ॥ हारकेयूरकटककुंडलैश्चसुशोभितं ॥ श्रीवत्सवक्षसं
चारुनूपुराद्युपशोभितं ॥ २० ॥ रत्नैर्नानाविधैर्युक्तंकटिसूत्रांगुलीयकैः ॥ गोरोचनाकुंकुमे

नललाटतिलकान्वितं ॥ २१ ॥ अलकाशोभितद्वक्त्रंपीतांबरयुगावृतं ॥ बिंबाधरपुटोद्भासिवंशामृतरसान्वितं ॥ २२ ॥ बर्हिपत्रकृतापीडंवन्यपुष्पैरलंकृतं ॥ कदंबकुसुमोद्बद्धचारुमालाविराजितम् ॥ २३ ॥ कोटिकंदर्पलावण्यंविलसद्बंधुरोदरं ॥ वेणुंगृहीत्वाहस्ताभ्यांमुखेसंयोज्यवादिनं ॥ २४ ॥ गायंतंदिव्यगानैश्चवृन्दावनगतंहरिं ॥ स्वर्गादिवपरिभ्रष्टकन्यकाशतमंडितं ॥ २५ ॥ गोगोवत्ससमाकीर्णबृहत्पंडैश्चमंडितं ॥ गोपकन्यासहस्रैस्तुपद्मपत्रायतेक्षणैः ॥ २६ ॥ अर्चितंभावकुसुमैस्त्रैलोक्यैकगुरुंपरं ॥ तुंबरुर्नारदश्चैवहाहाहुहुस्तथैवच ॥ २७ ॥ किन्नरीमिथुनंचापिश्रुत्वागीतंतथाहरेः ॥ वीणादिसाधनंत्यक्त्वाविस्मयाविष्टचेतसः ॥ २८ ॥ तेस्तुवंतिमहात्मानंगायकावियतिस्थिताः ॥ सिद्धगंधर्वयक्षैश्चअप्सरोभिर्विहंगमैः ॥ २९ ॥ स्थावरैःपन्नगैश्चापिसिद्धैर्विद्याधरैस्तथा ॥ शाखामृगैर्मनुष्यैश्चवीक्षमाणैःसुविस्मितैः ॥ ३० ॥ सर्वलक्षणसंपन्नैःसौंदर्येणातिशोभितं ॥ मोहनंसर्वगोपीनांलोकानांपतिमव्ययं ॥ ३१ ॥ नारदेनचसिद्धेनविश्वामित्रेणधीमता ॥ पराशरेणव्यासेनभृगुणांगिरसेनच ॥ ३२ ॥ दक्षेणसनकाद्यैश्चसिद्धेनकपिलेनच ॥ वास्तुवागीशहारीतयाज्ञवल्क्योशनःक्रतुः ॥ ३३ ॥ मार्कंडेयभरद्वाजपुलस्त्यपुलहादिभिः ॥ वसिष्ठाद्यैर्मुनींद्रैश्चस्तूयमानंसुरासुरैः ॥ ३४ ॥ ब्रह्मलोकंगतैःसिद्धैर्नागलोकगतैरपि ॥ अन्यैरपिसुरश्रेष्ठैःस्तूयमानंस्मरेद्विभुं ॥



॥ ३५ ॥ एवंयाश्चिंतयेन्मर्त्यश्चेतसाकृष्णमव्ययं ॥ संसारसागरंघोरमपिवत्सपदायते ॥ ३६ ॥

नःक्रतुः ॥ ३ ३ ॥ मा[illegible] ॥ [illegible]द्यैर्मुनींद्रैश्चस्तूयमानंसुरा
सुरैः ॥ ३ ४ ॥ ब्रह्मलोकंगतैःसिद्धैर्नागलोकगतैरपि ॥ अन्यैरपिसुरश्रेष्ठैःस्तूयमानंस्मरेद्विभुं ॥





॥ ३ ५ ॥ एवंयश्चिंतयेन्मंत्रीचेतसाकृष्णमव्ययं ॥ संसारसागरंघोरमपिवत्सपदायते ॥ ३ ६ ॥
॥ इतिश्रीगौतमीयतन्त्रेवृंदावनध्यानोनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥
॥ गौतमउवाच ॥ यद्यदुक्तंत्वयाब्रह्मन्तत्तत्सर्वंश्रुतंमया ॥ इदानींपरिपृच्छामिकेषांचात्राधि
कारिता ॥ १ ॥ नारदउवाच ॥ दीक्षायाश्चाधिकारित्वमाप्नोतिगुरुसेवकः ॥ द्विजानामनुपे
तानांस्वधर्माध्यापनादिषु ॥ २ ॥ यथाधिकारोनास्तीहसंध्योपासनकर्मसु ॥ तथाह्यदीक्षि
तानांतुमंत्रतंत्रार्चनादिषु ॥ ३ ॥ नाधिकारस्ततःकुर्यादात्मानंशिवसंस्कृतं ॥ अतएवहिदी
क्षार्थंसर्वज्ञंगुरुमाश्रयेत् ॥ ४ ॥ सुंदरःसुमुखःस्वच्छःसुलभोबहुतंत्रवित् ॥ असंशयःसंशय
च्छिन्निरपेक्षोगुरुर्मतः ॥ ५ ॥ वेदवेदांगवेदांतसिद्धांतज्ञानपारगः ॥ वाङ्मनःकायवित्तैश्चवि
ष्णोःशुश्रूणेरतः ॥ ६ ॥ विष्णुतंत्रानुसंधायीविष्णुविज्ञानवेदकः ॥ विष्णोःसमर्पकःसम्यक्
त्रिविधोत्पातकर्मणः ॥ ७ ॥ संमतःसतुदांतश्चमंत्रार्थज्ञानपारगः ॥ षट्चक्रभेदकुशलःषडध्व
ज्ञानपारगः ॥ ८ ॥ पिंडेपदेतथारूपेरूपातीतेविवेचकः ॥ पिंडंकुंडलिनीशक्तिःपदंहंसमुदा
हृतं ॥ ९ ॥ रूपंबिंदुरितिज्ञेयंरूपातीतंनिरंजनं ॥ संध्यात्रयविशेषज्ञोह्यध्वषट्कविशोधकः॥
॥ १० ॥ मंत्रचैतन्यविज्ञातागुरुरुक्तःस्वयंभुवा ॥ नमोस्तुगुरवेतस्मैप्रत्यक्षाययदाज्ञया ॥
॥ ११ ॥ मृद्धस्मदारुदृषदः फलंत्यविकलंफलं ॥ पंचाम्नायविशेषज्ञोनिग्रहानुग्रहेक्षमः ॥

॥ १२ ॥ शिष्यस्यसंशयश्छेत्तागुरुर्भवतिनापरः ॥ वैष्णवन्यायसिद्धांतचिंतामणिरिवापरः ॥
॥ १३ ॥ आश्रमीज्ञानकुशलोगुरुर्भवतिनापरः ॥ मंत्रमंत्रार्थचैतन्यंकुंडलीगतिवेदकः ॥
॥ १४ ॥ मंत्रसिद्धांतविधिविद्गुरुर्भवतिनापरः ॥ सुदूरमपिगंतव्यंयत्राम्नायविदोजनाः॥१५॥
तेऽपिस्तुत्यानमस्याश्चसेव्याश्चाभीष्टमिच्छता ॥ १६ ॥ एवंविधोगुरुर्ज्ञेयोह्यन्यथाशिष्यदुःख
दः ॥ शिष्यःकुलीनःशुद्धात्मापुरुषार्थपरायणः ॥ १७ ॥ अधीतवेदःकुशलःपितृमातृहितेर
तः ॥ धर्म्यविद्धर्म्यकर्ताचगुरुशुश्रूषणेरतः ॥ १८ ॥ अनित्यकर्मणांत्यागीनित्यानुष्ठान
तत्परः ॥ जितेंद्रियोजितालस्योजितमोहोविमत्सरः ॥ १९ ॥ गुरुवद्गुरुपुत्रेषुभक्तिमान्त
त्कुलेषुच ॥ एवंविधोभवेच्छिष्यस्त्वितरोगुरुदुःखदः ॥ २० ॥ वर्षैकेनभवेद्योग्योविप्रःसर्वगु
णान्वितः॥ वर्षद्वयेनराजन्योवैश्यस्तुवत्सरैस्त्रिभिः ॥ २१ ॥ चतुर्भिर्वत्सरैशूद्रःकथिताशीष्य
योग्यता ॥ यदाशिष्योभवेद्योग्यःकृपालुःसद्गुरुस्तदा ॥ २२ ॥ कृपयापरयासम्यक्दीक्षाया
विधिमाचरेत् ॥ मासपक्षतिथिवारंनक्षत्रादीन्विशोधयेत् ॥ २३ ॥ मंत्रारंभस्तुचैत्रेस्यात्सम
स्तपुरुषार्थदः ॥ वैशाखेरत्नलाभःस्याज्ज्येष्ठेतुमरणंध्रुवं ॥२४॥ आषाढेबंधुनाशःस्यात्पूर्णायुः
श्रावणेभवेत् ॥ प्रजानाशोभवेद्भाद्रेआश्विनेरत्नसंचयः ॥ २५ ॥ कार्तिकेमंत्रसिद्धिःस्यान्मार्ग
शीर्षेतथाभवेत् ॥ पौषेतुशत्रुपीडास्यान्माघेमेधाविवर्धनं ॥ २६ ॥ फाल्गुनेसर्वकामाःस्युर्म

श्रावणेभवेत् ॥ प्रजानाशो...॥ २५ ॥ कार्तिकेमंत्रसिद्धिःस्यान्मार्ग
शीर्षेतथाभवेत् ॥ पौषेतुशत्रुपीडास्यान्माघेमेधाविवर्धनं ॥ २६ ॥ फाल्गुनेसर्वकामाःस्युर्म



लमासंविवर्जयेत् ॥ पंचांगशुद्धेदिवसेसोदयेचन्द्रसूर्ययोः ॥ २७ ॥ गुरुशुक्रोदयेचैवशस्यते
मंत्रसंस्क्रिया ॥ रवौगुरौसितेसोमेकर्तव्याबुधशुक्रयोः ॥२८॥ शुक्लपक्षेशुभादीक्षाकृष्णेस्या
त्पंचमावधि ॥ द्वादश्यांसर्वथाकार्याचामलायांशुभेऽहनि ॥२९॥ कृष्णप्रियाद्वादशीसाकृ
ष्णदीक्षाप्रवर्तिनी ॥ उत्तरात्रयरोहिण्योरेवतीपुष्यवासवे ॥ ३० ॥ धनिष्ठावायुमित्राश्विपि
त्र्यंत्वाष्ट्रंचनैर्ऋतं ॥ ऐशवैष्णवहस्ताश्वदीक्षायांतुशुभावहाः ॥३१॥ अश्विनीरोहिणीस्वाति
विशाखाहस्तभेषुच ॥ कृष्णोत्तरात्रयेष्वेवंकुर्यान्मंत्राभिषेचनं ॥ ३२ ॥ शुभयोगेषुसर्वेषुदी
क्षासर्वशुभावहा ॥ शुभानिकरणान्याहुर्दीक्षायांचविशेषतः ॥ ३३ ॥ शकुन्यादीनिविष्टिं
चविशेषेणविवर्जयेत् ॥ चाराःसर्वेविवर्ज्यास्युःस्थिरराशिषुसौख्यदाः ॥ ३४ ॥ त्रिषडायग
ताःपापाःशुभाःकेंद्रत्रिकोणगाः ॥ दीक्षायांतुशुभाःसर्वेरंध्रस्थाःसर्वनाशकाः ॥ ३५ ॥ शि
ष्यस्यजन्मसंक्रांतौविशुद्धेअयनद्वये ॥ अन्येषुपुण्ययोगेषुग्रहणेचंद्रसूर्ययोः ॥ ३६ ॥ शि
ष्यानुकूलकालेवादीक्षासर्वशुभावहा ॥ सूर्यग्रहणकालेतुनान्यदन्वेषितंभवेत् ॥ ३७ ॥
तत्रयद्यत्कृतंसर्वमनंतफलदंभवेत् ॥ विनायासेनमंत्रस्यसिद्धिर्भवतिनान्यथा ॥ ३८ ॥ भू
मेःपरिग्रहंकुर्याद्यावदायतनंभवेत् ॥ शुक्लमृत्स्नाचयाभूमिर्ब्राह्मीसापरिकीर्तिता ॥ ३९ ॥
क्षत्रियारक्तमृत्स्नाचहरिद्वैश्याप्रकीर्तिता ॥ कृष्णभूमिर्भवेत्शूद्राचतुर्धासाप्रकीर्तिता ॥४०॥

ब्राह्मीसर्वार्थसिद्धिःस्यात्क्षत्रियाराज्यदामता ॥ धनधान्यकरीवैश्याशूद्रातुनिंदितामुने ॥४१॥ ततोभूमिंपरीक्षेतवास्तुज्ञानविशारदः ॥ शल्यादिशोधनंकुर्यात्तुषांगारादिदूरयेत् ॥ ४२ ॥ एतदकरणेमंत्रीनाकिंचित्फलमाप्नुयात् ॥ विप्राशिषावेदघोषैर्मंगलाचारपूर्वकं ॥ ४३ ॥ वास्तोर्मंडलकंकुर्याद्यथाशोभंयथाविधि ॥ पूर्वापरायतंसूत्रंविन्यसेद्धस्तमानतः ॥ ४४ ॥ तन्मध्येकिंचिदालभ्यमत्स्यौद्वौपरितोलिखेत् ॥ तयोर्मध्येस्थितंसूत्रंविन्यसेद्दक्षिणोत्तरे॥४५॥ द्वाभ्यांद्वाभ्यांतथाद्वाभ्यांकोणेषुमकरान्लिखेत् ॥ मत्स्यमध्यस्थिताग्राणितत्रसूत्राणिपातयेत् ॥ ४६ ॥ चतुरस्रंभवेत्तत्रचतुःकोष्ठसमन्वितं ॥ तत्पुनर्विभवेमंत्रीचतुःषष्ठिपदंतथा ॥४७॥ ईशानाद्राक्षसंयावद्यावदग्रेप्रभंजनं ॥ एवंसूतद्वयंदद्यात्कर्णसूत्रसमाहितः ॥ ४८ ॥ ब्रह्माणंपूजयेदादौमध्यकोष्ठचतुष्टये ॥ दिक्चतुष्टेषुपूर्वादियजेदर्यमणंतथा ॥ ४९ ॥ विवस्वंतं ततोमित्रंमहीधरमनंतरं ॥ कोणार्द्धकोष्ठद्वंद्वेषुवन्ह्यादीन्परितःपुनः॥ ५० ॥ सावित्रंसवितारंचशक्रमिंद्रजयंपुनः ॥ रुद्रंरुद्रजयंविद्वानापंचाप्यायवत्सकं ॥ ५२ ॥ तत्कर्णसूत्रोभयतःकोष्ठद्वंद्वेषुदेशिकः ॥ शर्वंगुहंचार्यमणंभंजकंपिलिपिच्छकं ॥ ५२ ॥ चरकींचविदारींचपूतनामर्चयेत्क्रमात् ॥ अर्चयेद्दिक्षुपूर्वादिसार्द्धाद्यष्टपदेष्विमान् ॥ ५३ ॥ अष्टावष्टविभागेनदेवतादेशिकोत्तमः ॥ क्रमादीशानपर्जन्यौजयंतःशक्रभास्करौ ॥ ५४ ॥ सत्योवृषांत

॥ ५३ ॥ अष्टाविष्टाविभा
गेनदेवतादेशिकोत्तमः ॥ क्रमादीशानपर्जन्यौजयंतःशक्रभास्करौ ॥ ५४ ॥ सत्योद्वषांत





रिक्षौचदिशिप्राच्यांव्यवस्थिताः ॥ अग्निःपूषाचवितथोयमश्चगृहरक्षकः ॥ ५५॥ गंधर्वोभृं
गराजश्चमृगोदक्षिणदिग्गताः ॥ निर्ऋतिर्दौवारिकश्चसुग्रीववरुणौततः ॥ ५६ ॥ पुष्पदंतासु
रौशोकरोगौप्रत्यग्दिशिस्थिताः ॥ वायुर्नागश्चमुख्यश्चसोमोभल्लाटएवच ॥ ५७ ॥ अकुला
ख्योदित्यऽदितीकुबेरस्यदिशिस्थिताः ॥ उक्तानामितिदेवानांपदान्यापूर्यपंचभिः ॥ ५८ ॥
रजोभिस्तेष्वथोतेभ्यःपायसान्नैर्बलिंहरेत् ॥ पायसैर्मधुरैःसर्वान्संयजेन्मधुरान्वितैः ॥५९॥
ततद्द्रव्यैर्वामतिमान्पूजयेद्दोषशांतये ॥ पायसोदनलाजैश्चयुक्तंधूपप्रसूनकैः ॥ ६० ॥ अन्ना
दिरससंयुक्तंमाषभक्तादिमंडितं ॥ गृहाणेमंबलिंब्रह्मन्वास्तुदोषान्प्रणाशय ॥६१॥ गंधादि
शर्कराऽपूपंपायसोपरिसंयुतं ॥ आर्यकाख्यगृहाणेमंसर्वदोषंप्रणाशय ॥ ६२ ॥ चंदनाभ्य
र्चितंनाथकर्पूरागरुमंडितं ॥ विवस्वन्वैगृहाणेमंसर्वदोषंप्रणाशय ॥६३ ॥ सगुडंपायसंना
थपुष्पादिसुसमन्वितं ॥ गृहाणेमंमहीतत्ववास्तुशांतिंप्रयच्छमे ॥ ६४ ॥ पिष्टकंसगुडंना
थरक्तगंधादिशोभितं ॥ गृहाणेमंबलिंसूर्यविघ्नमत्रप्रणाशय ॥ ६५ ॥ शीतमन्नंतथापुष्पं
कुंकुमादिसमन्वितं ॥ गृहाणेमंबलिंत्वद्यंशक्रदेवनमोऽस्तुते ॥६६॥ ओदनंघृतसंयुक्तंवस्त्रगं
धादिमंडितं ॥ गृहाणेमंबलिंत्वद्यमिंद्रजयनमोऽस्तुते ॥ ६७॥ पक्वापक्वमिदंमांसंवस्त्रपुष्पा
दिसंयुतं ॥ गृहाणेमंबलिंत्वद्यंइंद्रदेवनमाम्यहं ॥ ६८ ॥ समांसंघृतसंपक्वंगंधपुष्पादिसंयु

तं ॥ गृहाणेमंरुद्रजयवास्तुस्वस्तिप्रयच्छमे ॥ ६९ ॥ क्षीरखंडसमायुक्तंपुष्पादिभिरलंकृतं ॥ गृहाणेमंबलिंचापवास्तुशांतिंप्रयच्छमे ॥७०॥ दधीदंगुडसंमिश्रंगंधादिभिस्तुसंयुतं ॥ गृहाणेमंचापवत्साविघ्नमत्रप्रणाशय ॥ ७१ ॥ सघृतंमांसभक्तंचवस्त्रगंधाद्यलंकृतं ॥ बलिं गृहाणसर्वेमंरक्षोविघ्नंप्रणाशय ॥ ७२ ॥ मांसंपुष्पादिसंयुक्तंमाषभक्तोपरिस्थितं ॥ गृहाणेमंबलिंस्कंदरक्षोविघ्नंविनाशय ॥ ७३ ॥ समांसपिष्टकैर्युक्तंपक्वमांसोदकान्वितं ॥ अर्यमन्त्वैगृहाणेमंरक्षोविघ्नंप्रणाशय ॥ ७४ ॥ रक्तमांसोदनंमत्स्यंगंधधूपसमन्वितं ॥ जंभकत्वंगृहाणेमंरक्षोविघ्नंप्रणाशय ॥७५॥ छागकर्णान्वितंमांसंवस्त्रगंधादिसंयुतं ॥ पिलिपिच्छे गृहाणेमंरक्षोविघ्नंप्रणाशय ॥ ७६ घृतेनसाधितंमांसंवस्त्रगंधादिसंयुतं ॥ चरकित्वंगृहाणेमं रक्षोविघ्नंप्रणाशय ॥ ७७ ॥ रक्तपुष्पंसमांसंवैरक्तवस्त्रादिसंयुतं ॥ विदारिवैगृहाणेमंरक्षोविघ्नं प्रणाशय ॥ ७८ ॥ पित्तरक्तास्थिसंयुक्तंरक्तगंधादिमंडितं ॥ गृहाणेमंपूतनेत्वंरक्षोविघ्नंविनाशय ॥ ७९ ॥ सघृतंचाक्षतान्नंचवस्त्रगंधाद्यलंकृतं ॥ गृहाणेमंबलिंत्वीशवास्तुदोषापहारक ॥ ८० ॥ उत्पलंपायसैर्युक्तंवस्त्रादिकसमन्वितं ॥ गृहाणेमंबलिंत्वंपर्जन्यायनमोऽस्तुते ॥ ८१ ॥पंचहस्तंसुपीतंचध्वजंभक्त्यादिमंडितं ॥ गृहाणेमंबलिंत्वंजिष्णुसूतनमोऽस्तुते॥ ॥८२॥ नानाभोगयुतंरत्नवस्त्रालंकारसंयुतं ॥ गृहाणेमंबलिंत्वंशक्रदेवनमोऽस्तुते॥८३॥

...ध्यंजिष्णुसूतनमोऽस्तुते॥ ॥८२॥ नानाभोगयुतंरत्नवस्त्रालंकारसंयुतं ॥ गृहाणेमंबलिंत्वध्यंशक्रदेवनमोऽस्तुते॥८३॥



रक्तपुष्पयुतंभक्तंरक्तगंधादिभिर्युतं ॥ गृहाणेमंबलिंत्वध्यंभास्करायनमोऽस्तुते ॥८४॥ वित्रा नंधूम्रवर्णाभंगंधादिकसुशोभितं॥ रक्तयुक्तंगृहाणेमंबलिंसत्यनमोऽस्तुते॥८५॥ इदंतुमाषभ क्तंवैवस्त्रगंधादिपूजितं ॥ गृहाणेमंत्वंबलिंवास्तुदोषंप्रणाशय ॥८६॥ इदंतुस्वादुलंमांसंनै वेद्यादिकसंयुतं ॥ गृहाणेमंबलिंत्वध्यंव्योमशांतिंप्रयच्छमे ॥८७॥ सुवर्णपिष्टकंचाथवस्त्रगं. धादिभिर्युतं ॥ घृतान्वितंगृहाणेमंसप्तजिव्हनमोऽस्तुते ॥८८॥ क्षीरंलाजामांसयुक्तंरक्तपु ष्पादिसंयुतं ॥ गृहाणेमंबलिंत्वध्यंपूषदेवनमोऽस्तुते ॥८९॥ दधिगंधादिभिर्युक्तंपीतपुष्पस मन्वितं ॥ बलिंवितथगृण्हेमंविघ्नमत्रप्रणाशय ॥ ९० ॥ भक्तंमधुप्लुतंरक्तवस्त्रादिपरिमंडि तं ॥ गृहाणेमंबलिंत्वध्यंयमदेवनमोऽस्तुते ॥ ९१ ॥ पक्कमांसोदनंपीतवस्त्रादिपरिमंडितं॥ प्रीतिकरंगृहाणेमंगृहरक्षनमोऽस्तुते ॥९२॥ नानागंधसमायुक्तंरक्तपुष्पादिभिर्युतं ॥ बलिं गृहाणगंधर्ववास्तुदोषंप्रणाशय ॥ ९३ ॥ इमांतेनाकुलींजिव्हांमाषभक्तोपरिस्थितां ॥ गृ हाणेमंबलिंभृंगराजशांतिंप्रयच्छमे ॥ ९४ ॥ एवंघृतगुडोपेतंगंधपुष्पादिभिर्युतं ॥ गृहाणे मंबलिंत्वध्यंमृगदेवनमोऽस्तुते ॥ ९५॥ शर्करासंयुतंमिश्रंगंधपुष्पादिमंडितं ॥ निर्ऋतेगृण्ह मेप्रीतंबलिंदोषंप्रणाशय ॥ ९६ ॥ चंदनागरुकाश्मीरगंधपुष्पादिभिर्युतं ॥ गृहाणेमंबलिं त्वध्यंदौवारिकनमोऽस्तुते ॥ ९७॥ इदंतुपायसंनाथगंधपुष्पादिमंडितं ॥ सुग्रीववैगृहाणेमं

बलिंशांतिंप्रयच्छमे ॥ ९८ ॥ यवाग्राणिचगोदुग्धंभक्तोपरिसुशोभितं ॥ गृहाणेमंबलिंत्व
घंजलराजनमोऽस्तुते ॥ ९९ ॥ कुशास्तरंमाषभक्तंघृतगंधादिसंयुतं ॥ पुष्पदंतगृहाणेमंब
लिंदोषंप्रणाशय ॥ १०० ॥ मधुनासहितंपिष्टंगंधाद्यैरुपशोभितं ॥ बलिंगृहाणासुरेन्द्रस
र्वदोषंप्रणाशय ॥ १ ॥ घृतमन्नसमायुक्तंकर्पूरादिसमान्वितं ॥ गृहणेमंबलिंशोकसर्वशांतिं
प्रयच्छमे ॥ २ ॥ यवजंतंदुलंनाथगंधपुष्पादिशोभितं ॥ गृहाणेमंबलिंरोगसर्वदोषंप्रणाश
य ॥ ३ ॥ सघृतंमंडकंचेदमन्नाद्यैरुपशोभितं ॥ गृहाणेमंबलिंत्वघमृगवाहनमोऽस्तुते ॥ ४ ॥
इदंतुकृसरंचान्नंदुग्धगंधादिमंडितं ॥ पातालेशगृहाणेमंसर्वविघ्नंप्रणाशय ॥ ५ ॥ नारिके
लोदकंभक्तंपीतवस्त्रादिमंडितं ॥ गृहणेमंबलिंमुख्यसर्वदोषंप्रणाशय ॥ ६ ॥ दधिगंधादि
भिर्युक्तंपीतपुष्पसमन्वितं ॥ बलिंप्रगृह्यतांसोमसर्वदोषंप्रणाशय ॥ ७ ॥ ओदनंघृतसंमिश्रं
गंधपुष्पसमन्वितं ॥ गृहाणेमंबलिंत्वघभल्लाटकनमोऽस्तुते ॥ ८ ॥ माषान्नंचघृताद्युक्तंगंध
पुष्पादिमंडितं ॥ गृहाणेमंबलिंत्वघंअर्गलाख्यनमोऽस्तुते ॥ ९ ॥ पोतिकांमधुसंमिश्रांवस्त्र
गंधादिसंयुतां ॥ गृहाणेमंबलिंत्वघंदेवमातर्नमोऽस्तुते ॥ १० ॥ क्षीरखंडसमायुक्तंनानापुष्पो
पशोभितं ॥ दैत्यमातर्गृहाणेमंसर्वदोषंप्रणाशय ॥ ११ ॥ स्वर्गपातालमध्येचयेदेवावास्तु
देवताः ॥ गृण्हंत्विमंबलिंत्वघंतुष्टायांतुस्वमंदिरं ॥ १२ ॥ मातरोभूतवेतालायेचान्येबलि



कांक्षिणः ॥ विष्णोःपारिषदायेचतेपिगृण्हन्त्विमंबलिं ॥ १३ ॥ पितृभ्यःक्षेत्रपलेभ्योबलिंदत्वा

पश्चिमेत ॥ इत्यभि... ॥ ११ ॥ ...तालमध्यचयदेवावास्तु
देवताः ॥ गृण्हंत्विमंबलिंत्वद्यंतुष्टायांतुस्वमंदिरं ॥ १२ ॥ मातरोभूतवेतालायेचान्येबालि


कांक्षिणः ॥ विष्णोःपारिषदायेचतेपिगृण्हन्त्विमंबलिं॥१३॥पितृभ्यःक्षेत्रपलेभ्योबलिंदत्वा प्रकामतः ॥ अभावादुक्तिमुदिश्यकुशपुष्पादिभिर्यजेत् ॥ १४ ॥ ॥इति श्रीगौतमीयतन्त्रे वास्तुपूजनं नामपंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥ ॥छ ॥

नारदउवाच ॥भूमिशुद्धिंविधायेत्थंरचयेद्यागमंडपं॥नवहस्तंसप्तहस्तंपंचहस्तंत्रिहस्तकं॥१॥ यथावच्चप्रकुर्वीतदीर्घायामप्रमाणतः ॥ कर्तुर्दक्षिणहस्तस्यमंध्यमांगुलिपर्वणः ॥ २ ॥ मध्यस्यदैर्घ्यमानेनमानांगुलमुदीरितम् ॥ गृहादिकुंडकरणंमंडलंवेदिकास्तथा ॥३ ॥ मानांगुलेनकर्तव्यंनान्यैरपिकदाचन ॥ प्रतिमाकरणेचैवमानांगुलमुदीरितं ॥ ४ ॥ वापीकूपतडागाहिदीर्घिकाःसेतुरेवच ॥ मुष्ट्यंगुलेनमतिमान्कारयेत्फलहेतवे ॥ ५ ॥ रथादिदोलिकांचैवपोतंशकटमेवच ॥ यवांगुलेनकर्तव्यंनान्येनतुकदाचन ॥ ६ ॥ मुष्ट्यंगुलेप्रमाणानियत्किंचित्कथितानिच ॥ यजमानस्यकर्तव्यंनान्यस्यापिकदाचन ॥ ७ ॥ मसृणंरचयेद्गेहंषोडशस्तंभसंयुतं ॥ मध्येचतुष्टयंतत्रनिरूप्यंद्वादशाभितः ॥ ८ ॥ चतुर्द्वारसमायुक्तंचतुष्कोणसमन्वितं॥ विश्वकर्मानुष्ठितेनयथाशोभंनिवेशयेत् ॥ ९ ॥ अष्टदिक्षुध्वजानष्टौतत्तद्दिक्पालवर्णतः ॥ पुष्पमालावितानाढ्यंसर्वाश्चर्यमनोहरं ॥ १० ॥ तस्याग्नेयेचोत्तरेवारचयेद्यागमंडपं ॥ तत्तत्स्थलेचैकगेहेकुंडमेकंविनिर्मयत् ॥ ११ ॥ मध्येचवेदिकांकुर्याद्दर्पणो

पल्लवच्छुभां ॥ मंडपांतास्त्रिभागस्यचैकभागेनानिर्मितं ॥ १२ ॥ मुष्टिमात्रोन्नतांसर्वलक्षणैर्लक्षणान्वितां ॥ ततःकुंडंचखनयेल्लक्षणंतस्यमेशृणु ॥ १३ ॥ पूर्वापरायतंसूत्रंहस्तमात्रंप्रसार्यच ॥ तस्याग्रयोर्मत्स्ययुग्मंकुर्यात्स्पष्टंयथाभवेत् ॥१४॥ द्विभागेकृत्यतत्सूत्रंपातयेद्दाक्षिणोत्तरे ॥ तदग्रयोर्मत्स्ययुग्मंकुर्यात्स्पष्टंयथाभवेत् ॥१५॥ चतुर्दिक्षुचतुःसूत्रंपातयेत्तत्प्रमाणतः॥ चतुरस्रंचतुःकोष्ठंभवेदातिमनोहरं ॥ १६ ॥ कोणसूत्रद्वयंदद्यात्प्रमाणंतेनलक्षयेत् ॥ चतुरस्रंभवेत्कुंडंसर्वलक्षणलक्षितं ॥१७ ॥ ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चसमनुष्ठितं ॥ सर्वकर्मकरंप्रोक्तंशांत्याद्यखिलकर्मसु ॥ १८ ॥ अनेनजनयेत्सर्वकुंडानिमनुवित्तमः॥ ततःकुंडंखनेन्मंत्रीयथाशास्त्रविधानवित् ॥ १९ ॥ प्राच्यादिषुशिरःकृत्वानागःशेतेत्रिभिस्त्रिभिः ॥ भाद्रादित्रिषुमासेषुतस्यक्रोडगृहंशुभं ॥२०॥ त्यक्त्वासर्पस्यगात्रंचाशिरःपुच्छंप्रयत्नतः ॥शिरोघाताद्भवेन्मृत्युःपिंडेषुपिंडघातनं ॥ २१ ॥ पुच्छेतुदुःखसंभूतिःक्रोडेसर्वार्थसाधनं ॥ यावान्कुंडस्यविस्तारःखननंतावदीरितं ॥ २२॥ कंठमेकांगुलंत्यक्त्वामेखलास्तिस्रएवही ॥ कुंडस्यफलमानेनवेदाग्निनयनांगुलाः ॥२३॥ चतुरस्रेभवेयुस्ताश्चतुरस्रास्तुशोभनाः॥ होतुरग्रेयोनिनामाकुंजराधरसन्निभा ॥२४॥ षट्चतुर्द्व्यंगुलायामीवस्तारोन्नतशालिनी ॥षडंगुलाभवेद्दीर्घाचतुरंगुलविस्तृता ॥ २५ ॥ द्व्यंगुलाचोन्नतायोनिरेवंलक्षणलक्षिता ॥ स्थला

रंध्रयोनिनामाकुंजराधरसन्निभा ॥२४॥ षट्चतुर्द्व्यंगुलायामविस्तारोन्नतशालिनी ॥ षडंगु
लाभवेद्दीर्घाचतुरंगुलविस्तृता ॥ २५ ॥ द्व्यंगुलाचोन्नतायोनिरेवंलक्षणलक्षिता ॥ स्थला



दारभ्यनालंस्यात्सरंध्रंयोनिमध्यतः ॥२६॥ सूक्ष्माग्रंस्थूलमग्रंचसरंध्रंमानमिष्यते ॥ योनिम
ध्येबलिंकुर्यात्तदाज्यग्राहिसंज्ञकं ॥ २७ ॥ कुंडमध्येभवेन्नाभिपद्मंवाचतुरस्रकं ॥ द्व्यंगुलं
चोन्नतंतत्तुचतुरंगुलविस्तृतं ॥२८ ॥ अर्द्धांगुलंतयोर्न्यग्रंकुर्यादीषदधोमुखं ॥ यवद्वयप्रमा
णेनकुंडेष्वन्येषुवर्द्धयेत् ॥ २९ ॥ कंठंतुद्व्यंगुलंतत्रवर्द्धयेत्कुंडमानतः ॥ कर्णसूत्रप्रमाणेन
द्विहस्तंकुंडमुद्धरेत् ॥३० ॥ सर्वकुंडेषुसर्वत्रवर्द्धयेद्विधिनाऽमुना ॥ कुंडंतुप्रकृतिःसूक्ष्मासर्वल
क्षणलक्षिता ॥ ३१॥ उभौपादौकरौतस्यभवेत्कोणचतुष्टयं ॥ उदरंकुंडमित्युक्तंयोनिःकार
णरूपिणी ॥ ३२ ॥ तेनतत्रैवहव्यानांविधातुःफलमुत्तमम् ॥ फलंवितनुतेसम्यगन्यथाविफ
लायते ॥ ३३ ॥ सात्विकीमेखलापूर्वाद्वितीयाराजसीस्मृता ॥ तृतीयातामसीज्ञेयाइत्युक्तं
कुंडलक्षणं ॥ ३४ ॥ मंडपस्योत्तरेभागेशालांपूर्वापरोन्नतां ॥ गढांकुर्याद्यथाशोभांसर्वदृष्टि
मनोहरां ॥ ३५ ॥ पूर्वापरायतांतत्रपंचसूत्रनिपातनात् ॥ दक्षिणोत्तरसूत्राणितद्वदेकादशा
र्पयेत् ॥ ३६ ॥ मध्येमध्येविलुप्येतत्स्यात्द्वादशकोष्टके ॥ पंचवर्णरजोभिस्तत्पदानिता
निपूरयेत् ॥ ३७ ॥ पालिकाःपंचमुख्यश्चशरावाणिचपातयेत् ॥ द्विषट्द्वयष्टचतुर्विंशदुच्छ्रि
तानियथाक्रमं ॥ ३८ ॥ तावन्मात्रमुखान्यूर्ध्वंपदानिपरिकल्पयेत् ॥ तत्रिभागांगुलिमुख्ये
विस्तृतानिप्रकल्पयेत् ॥ ३९ ॥ नारायणमहेशानब्रह्मरूपाणितान्यपि ॥ पालिकापंचसु

ख्यश्चशरावाणिततःपरं ॥ ४० ॥ आक्षालितानिमंत्रेणपुण्यानितानिचैवाहि ॥ संवेष्टितानि
परितास्त्रिगुणैःशुभतंतुभिः ॥ ४१ ॥ मृद्वालुकाकरीषैश्चपूरितानिसमंततः ॥ समर्चितस्वदे
हानिपाश्चिमादिक्रमेणच ॥ ४२ ॥ विन्यस्यशालिश्यामाकप्रियंगुतिलसर्षपान् ॥ मुद्गमाषौ
तथाशिंबिकुलित्थंचाढकींतथा ॥ ४३ ॥ प्रक्षालितानिशुद्धेनजलेनतदनंतरं ॥ अभ्यार्चित
स्वदेवानिमूलमंत्रार्चितानिवै ॥ विप्राविषापंचघोषैःसहानिःसार्यतानथ ॥ ४४ ॥ विषिंच्य
चहरिद्राभिर्नमस्यंश्चपुनःपुनः ॥ वसनेनसमाच्छाद्यनवीनेनततःपरं ॥ ४५ ॥ शुद्धाङ्गिरासि
षिंच्याथसायंप्रातर्मुहुर्मुहुः ॥ इत्येवंसप्तरात्रंवानवरात्रमथापिवा ॥ ४६ ॥ स्थापयेद्वापयेत्तत्र
रात्रीशेभ्योबलिंनिशि ॥ लाजातिलहरिद्राश्चसक्तुचूर्णंतथादधि ॥ ४७ ॥ एतैःप्रथमरात्रौच
भूतेभ्योबलिमुत्सृजेत् ॥ द्वितीयायांक्षिपेद्रात्रौपितृभ्यास्तिलतंदुलैः ॥ ४८ ॥ तृतीयायांच
पक्षेभ्यःसुलाजादधिसक्तुभिः ॥ चतुर्थ्यांरजन्यांदद्यान्नागेभ्यश्चपुनर्बलिं ॥ ४९ ॥ नारिके
लोदकैर्मिश्रंसक्तुचूर्णमनोहरं ॥ पद्माक्षतैर्ब्रह्मणेचपंचम्यामुत्सृजेद्बलिं ॥५०॥ सापूपमन्नंभ
र्गायषष्ठ्यामथसमाहरेत्॥गुडोदनंविष्णवेचसप्तम्यांविस्तरेद्बलिं ॥५१॥अष्टम्यांमातृकाभ्यश्च
छागैर्मेषैश्चपाक्षिभिः ॥ मीनैस्तथाचमधुभिराहरेद्बलिउत्तमं ॥ ५२ ॥ तिलोदकंशिवायैचन
वम्यामाहरेद्बलिं ॥ प्रणवादिचतुर्थ्यंतंस्वनामचनमोंतकं ॥ ५३ ॥ बलिमंत्रस्तथैवस्यादा

वम्यामाहरेद्बलिं ॥ प्रणवादिचतुर्थ्यंतस्वनामचनमोंतकं ॥ ५३ ॥ बलिमंत्ररतथैवस्यादा

वाहनविसर्जने ॥ त्रिविधानांचपात्राणांपरितोबहिरेवहि ॥ ५४ ॥ अष्टादिक्षुचसंदद्याल्लोक
पालेषुयत्नतः ॥ प्रोक्तेषुतेषुपात्रेषुब्रह्मविष्णुहरान्यजेत् ॥ ५५ ॥ मुद्गप्रियंगुनिष्पावावा
युरग्निकुलित्थके ॥ आढक्यांरक्षसांदेहेवृद्धौवैवस्वतास्तिले ॥ ५६ ॥ इन्द्रःश्यामेराजमाषेव
रुणश्चतथासुने ॥ वस्त्रखंडेदृढेबध्वाकिंचित्किंचिज्जलंक्षिपेत् ॥ ५७ ॥ उद्धृत्ययामद्वितये
समतीतेचवापयेत् ॥ बीजानांदैवतंसोमःसरात्रौकांतिमान्यतः ॥ ५८ ॥ तस्मादात्त्यबी
जानिनिशायामेववापयेत् ॥ प्ररूढाण्यंकुराण्येवनोदीक्षेतकदाचन ॥ ५९ ॥ आचार्यएवप्र
विशेच्छिष्योवाथतदाज्ञया ॥ प्ररूढैरंकुरैःकर्तुर्निर्दिशेच्चशुभाशुभं ॥ ६० ॥ श्यामैःकृष्णैरंकु
रैश्चअर्थहानिश्चदुःखवान् ॥ कुब्जैर्दुःखंविप्ररूढैर्मृतिंकुर्यान्नसंशयः ॥ ६१ ॥ आचार्यःकारये
च्चैवप्रलयंवीक्ष्ययत्नतः ॥ शांतिकंसर्वथाकुर्यात्कर्तुरीप्सितसिद्धये ॥ ६२ ॥ ॥ इतिश्रीगौत
मीयतंत्रे नारदप्रोक्ते षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

नारदउवाच ॥ अथदीक्षांप्रवक्ष्यामिसर्वासिद्धिप्रवर्तिकां ॥ यांविनानैवसिद्धःस्यान्मंत्रोवर्षशतै
रपि ॥१॥ तदंगंकथितंपूर्वमिदानींकथ्यतेशृणु ॥ ददातिदिव्यभावंचक्षपणात्पापसंततेः ॥२॥
तेनदीक्षेतिविख्यातामुनिभिस्तंत्रपारगैः ॥ शिष्यःस्नातःसुवेषश्चसर्वद्रव्यसमन्वितः ॥ ३ ॥
आचार्यंवृणुयाद्भक्त्यावस्त्रालंकारभूषणैः ॥ कुर्यान्नांदीमुखंश्राद्धंब्राह्मणान्परितोषयेत् ॥ ४ ॥

गोभूहिरण्यवस्त्राद्यैस्तोषयेद्गुरुमात्मनः ॥ यथाददातिसंतुष्टःप्रसन्नोवरदोमनुं ॥ ५॥ इदानींपूर्वं कृत्यंचप्रसंगात्कथयामिते ॥ यत्कृत्वाधिकारितांयातिमंत्रयंत्रार्चनादिषु ॥६॥ यंविनानैवसिद्धिःस्यान्नरकंचप्रपद्यते ॥ ब्राह्मेमुहूर्तेउत्थायचिंतयेद्गुरुदैवतं॥७॥स्वमूर्द्धनिसहस्रारेकृष्णाख्यंपरबिंदुकं ॥शशांकायुतसंकाशंवराभयलसत्करं॥८॥शुक्लांबरधरंश्रीमच्छुक्लमाल्यानुलेपनं ॥ वामोरौरक्तशक्त्याचयुक्तंकृष्णाख्यमव्ययं ॥९॥ शिवेनैक्यंसमानीयध्यायेत्परगुरुंधिया॥मानसैरुपचारैश्चसंतर्प्यमनसासुधीः ॥१०॥ स्तोत्रैस्तुत्वानमस्कुर्यान्मंत्रदेवेसमर्चयेत् ॥ अज्ञानतिमिरांधस्यज्ञानांजनशलाकया ॥११॥ चक्षुरुन्मीलितंयेनतस्मैश्रीगुरवेनमः ॥ अखंडमंडलाकारंव्याप्तंयेनचराचरं ॥ १२ ॥ तत्पदंदर्शितंयेनतस्मैश्रीगुरवेनमः ॥ मूलाधारेत्रिकोणाख्येकोटिसूर्यसमत्विषि ॥ १३ ॥ ध्यायेत्कुंडलिनींनित्यांकामबीजोपरिस्थितां ॥ श्यामांसूक्ष्मांचविश्वस्यसृष्टिस्थितिलयात्मिकां ॥१४॥ विश्वातीतांज्ञानरूपांचिंतयेदूर्ध्ववाहिनीं ॥ चक्रषट्कंविनिर्भिद्यप्रापयित्वापरेशिवे ॥ १५ ॥ तदभेदसमापन्नामनाकुलमनाःस्मरेत् ॥ पाययित्वासुधापूरंस्रावयेच्छक्तिमंडलं ॥ १६ ॥ तेनैवचक्रभेदेनमूलाधारंसमानयेत् ॥ अनेनध्यानयोगेनमंत्राःसिद्ध्यंतिनान्यथा ॥ १७ ॥ वैरिपक्षेस्थितायेचवृद्धायौवनगर्विताः ॥ येचान्येदोषदुष्टाश्चसिद्ध्यंत्येवनचान्यथा ॥१८॥ परेणचस्वमात्मानंकृष्णाख्येनविभावयेत्॥



अहंकृष्णोनचान्योऽस्मिब्रह्मैवाहंनशोकभाक् ॥१९॥ सच्चिदानंदरूपोऽहंनित्यमुक्तस्वभा

येचान्येदोषदुष्टाश्चासिद्ध्यंत्येवनचान्यथा ॥१८॥ परेणचस्वमात्मानंकृष्णाख्येनविभावयेत् ॥

अहंकृष्णोनचान्योऽस्मिब्रह्मैवाहंनशोकभाक् ॥१९॥ सच्चिदानंदरूपोऽहंनित्यमुक्तस्वभाववान् ॥ त्वमेवाहमहंत्वंचसच्चिन्मात्रवपुर्भवान् ॥ २० ॥ आवयोरंतराकृष्णनश्यत्वाज्ञाबलात्तव ॥ मयातीर्णोभवोघोरःकृत्यंकिंचिन्नमेऽस्तिहि ॥२१॥ तथापिदेहिमेनाथआज्ञांतवनिषेवणे ॥ २२॥ जानामिधर्मंनचमेप्रवृत्तिर्जानाम्यधर्मंनचमेनिवृत्तिः ॥ केनापिदेवेनहृदिस्थितेनयथानियुक्तोऽस्मितथाकरोमि ॥२३॥ एवंसंप्रार्थ्यमनसाकुर्यात्पौर्वाण्हिकींक्रियां ॥ दीक्षितस्यविधानेनतथाचब्रह्मचारिणां ॥ २४ ॥ वानप्रस्थस्थितानांचशौचादिद्विगुणाक्रिया ॥ संन्यासिनांविशेषेणकृत्यंचतुर्गुणंभवेत् ॥ २५ ॥ आचम्यविधिवन्मंत्रीशुचौदेशेचसंविशेत् ॥ तथाप्रातस्तनींसंध्यांकुर्याद्गुरुनिषेवकः ॥ २६ ॥ जलेसंयोज्यतीर्थानित्रिंवारंमूलमंत्रतः ॥ क्षिप्त्वाभूमौकुशाग्रेणसप्तधामूर्ध्निसिंचयेत् ॥ २७ ॥ वामेजलंसमादायमंत्रयेद्दक्षिणेनतु ॥ पुनर्वामेनतंक्षिप्त्वामूर्ध्निसिंचेत्त्रिवारकं ॥ २८ ॥ उपदेशेनगुरुणामुद्रयादिव्यसंज्ञया ॥ इडयाऽऽकृष्यतत्तोयंक्षालितांतर्मलंपुनः ॥ २९॥ दक्षयातज्जलंवज्रशिलायामथस्फालयेत् अस्त्रमंत्रेणाविधिवत्पुनराचमनंभवेत् ॥ ३० ॥ अघमर्षणमेतत्तुसर्वपापनिकृंतनं ॥ तोयांजलिंपुनःक्षिप्त्वासूर्यमंडलमध्यगां ॥ ३१ ॥ गायत्रींभावयेद्देवींसूर्यासनकृताश्रयां ॥ उद्यदादित्यसंकाशांपुस्तकाक्षवराभयां ॥ ३२ ॥ कृष्णाजिनधरांब्राह्मींध्यायेत्ता

रकितेंबरे ॥ उत्थायकृष्णगायत्रींतदभेदशतंजपेत् ॥ ३३ ॥ कृष्णायविघ्नहेत्युक्त्वादामो
दरायधीमाहि ॥ तन्नोविष्णुःप्रचोदयात्गायत्र्येषाप्रकीर्तिता ॥ ३४ ॥ सर्ववेदमयीसर्वपाव
नीवरदायिनी ॥ प्रणवाद्यामुक्तिकरीश्रीबीजाद्याचभोगदा ॥ ३५ ॥ ह्लेखाद्यामहासिद्धि
करीसर्ववशंकरी ॥ वागुराद्याचवैदुष्याकामाद्याजनरंजनी ॥ ३६ ॥ ऐवंतेकथितामंत्रसंध्या
मंत्रफलाप्तये ॥ नकुर्याद्यदिमोहेननदीक्षाफलमाप्नुयात् ॥ ३७ ॥ संक्षेपसंध्यामथवाकुर्या
न्मंत्रीह्यशक्तितः ॥ सायंप्रातश्चमध्यान्हेकृष्णंध्यात्वामनुंजपेत् ॥ ३८ ॥ इतिसंध्यात्रयं
प्रोक्तंकर्मणांसिद्धिदायकं ॥ संध्यायांपतितायांवैगायत्रींदशधाजपेत् ॥ ३९ ॥ यथाप्राणं
यथाज्ञानंतथाकुर्यादतंद्रितः ॥ यद्यत्कृत्यंमंगलार्थंतत्तत्कुर्यात्तथैवच ॥ ४० ॥ अदर्शदर्शं
नंकुर्याद्घृतस्पर्शंचकज्जलं ॥ सत्पोष्यपोषणार्थायक्षेमंयोगंचचिंतयत् ॥ ४१ ॥ स्नायाच्चकृ
ष्णपूजार्थंनद्यादौविमलेजले ॥ शक्तस्त्रिषवणंकुर्यादन्यथाद्विःसकृच्चवा ॥ ४२ ॥ ईज्यातुपं
चधाप्रोक्तातासांभेदान्शृणुष्वमे ॥ अभिगमनमुपादानंयोगःस्वाध्यायएवच ॥४३॥ ईज्या
पंचप्रकारार्चाक्रमेणकथयामिते ॥ तत्राभिगमनंनामदेवतास्थानमार्जनं ॥४४॥ उपलेपन
निर्माल्यदूरीकरणमेवच ॥ उपादानंनामगंधपुष्पादिचयनंयथा ॥ ४५ ॥ ईज्यानामचेष्टदे
वपूजनंचयथार्हतः ॥ स्वाध्यायोनामअर्थानुसंधानपूर्वकोजपः ॥ ४६ ॥ सूक्तस्तोत्रादिपा



ठश्चहरेःसंकीर्तनंयथा ॥ तत्त्वादिशास्त्राभ्यासश्चस्वाध्यायःपरिकीर्तितः ॥ ४७ ॥ योगोनाम

...॥ ४५ ॥ इज्यानामचेष्टदेवपूजनंचयथार्हतः ॥ स्वाध्यायोनामअर्थानुसंधानपूर्वकोजपः ॥ ४६ ॥ सूक्तस्तोत्रादिपा

ठश्चहरेःसंकीर्तनंयथा ॥ तत्वादिशास्त्राभ्यासश्चस्वाध्यायःपरिकीर्तितः ॥ ४७ ॥ योगोनाम स्वदेवस्यस्वात्मत्वेनैवभावना ॥ इतिपंचप्रकारार्चाकथितातवसुव्रत ॥ ४८ ॥ सामीप्यसारूप्यसादृश्यसायुज्यफलदाक्रमात् ॥ अनेनक्रमयोगेनशुद्धांतःकरणोभवेत् ॥ ४९ ॥ प्रातःकालेचमध्यान्हेस्नानार्थंतीर्थमाश्रयेत् ॥ स्नानंतुद्विविधंप्रोक्तमंतर्बाह्यविभेदतः ॥ ५० ॥ खेस्थितंपुंडरीकाक्षंमन्त्रमूर्तिंप्रभुंस्मरेत् ॥ अनंतादित्यसंकाशंवासुदेवंचतुर्भुजं ॥ ५१ ॥ शंखचक्रगदापद्ममुकुटंवनमालिनं ॥ तत्पादोदकजांधारांनिपतंतींस्वमूर्द्धनि ॥ ५२ ॥ चिंतयेद्ब्रह्मरंध्रेणप्रविशन्तींस्वकांतनुं ॥ तयासंक्षालयेन्मंत्रीअंतर्देहगतंमलं ॥ ५३ ॥ तत्क्षणाद्विरजोमंत्रीजायतेस्फाटिकोत्तमः ॥ इदंस्नानवरंबाह्यंतीर्थहस्तादिकंस्मृतं ॥ ५४ ॥ योगिनांस्नानमेतद्धिकथितंपरमाद्भुतं ॥ बाह्यस्नानंतथाकुर्याद्यथाशास्त्रविधानवित् ॥ ५५ ॥ मलप्रक्षालनंस्नानंस्वशाखोक्तंसमाचरन् ॥ मंत्रस्नानंततःकुर्यात्कर्मणांसिद्धिहेतवे ॥ ५६ ॥ अस्त्रेणालोड्यमृत्स्नावैत्रिभागांतांतुकारयेत् ॥ जलेचैकंद्वादशधानिःक्षिपेदस्त्रमुच्चरन् ॥ ५६ ॥ एकंमूर्द्धादिनाभ्यंतंपठन्मूलंविलेपयेत् ॥ शेषंपादादिनाभ्यंतंतथैवपरिलेपयेत् ॥ ५८ ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेऽस्मिन्सन्निधिंकुरु ॥ ५९ ॥ आवाहयामित्वांदेविस्नानार्थमिहसुंदरि ॥ एहिगंगेनमस्तुभ्यंसर्वतीर्थसमान्विते ॥ ६० ॥

एवमावाह्यविधिवन्मूलमंत्रेणसंयुतः ॥ आमन्त्र्यांभसिसंयोज्यसोमसूर्याग्निमंडलान् ॥ ६१॥
विचिंत्यमंत्रीतन्मध्येविमज्जन्मूलमुच्चरन्॥उत्थायाचम्यतत्पश्चात्षडंगन्यासस्संयुतः॥६२॥
आत्मानंदशधासिंचेन्मुद्रयाकलशाख्यया ॥ सप्तकृत्वोभिषिंचेद्वामनुनामंत्रितैर्जलैः ॥६३॥
वामहस्तेकृतांमुष्टिंदक्षहस्तेनवेष्टयेत् ॥ कलशाख्याभवेन्मुद्रासर्वपापहराशुभा ॥ ६४ ॥
शालग्रामशिलातोयमपीत्वायस्तुमस्तके ॥ प्रक्षेपणंप्रकुरुतेब्रह्महासनिगद्यते ॥६५॥वि
ष्णुपादोदकात्पूर्वंविप्रपादोदकंपिबेत् ॥ विरुद्धमाचरेन्मोहादात्महासनिगद्यते ॥ ६६ ॥
पृथिव्यांयानितीर्थानितानितीर्थानिसागरे ॥ सागरेयानितीर्थानिपादेविप्रस्यदक्षिणे ॥६७॥
ततःसंक्षेपतोदेवान्मनुष्यांस्तर्पयेत्पितॄन् ॥पीडयित्वांबरंचोरूप्रक्षाल्याचम्यवाग्यतः॥६८॥
धारयेद्वाससीशुद्धेपरीधानोत्तरीयके ॥ आच्छिन्नेसदृशेशुक्लेआचमेत्पीठसंस्थितः ॥ ६९ ॥
ऊर्ध्वपुंड्रंचंदनेनकृत्वासंध्यांसमाचरेत् ॥ पुर्वंतुकथितेसंध्यांयजेद्देवींसमाहितः ॥७०॥ श्या
मवर्णांचतुर्बाहुंशंखचक्रलसत्करां ॥ गदापद्मधरांदेवींसूर्यासनकृताश्रयां ॥ ७१ ॥ ध्या
त्वाजलांजलिंक्षिप्त्वातर्पयेत्कृष्णमव्ययम् ॥ गुरुपंक्तिपुरातर्प्यतर्पयेदिष्टदेवतां ॥ ७२ ॥ ना
रदंपर्वतंविष्णुंनिशठोद्धवदारुकान् ॥ विष्वक्सेनंचशैलेयंगुरुंचतर्पयेत्त्रिशः॥ ७३ ॥ पं
चविंशतिसंख्यातोदशधावात्रिधापिवा ॥ मूलमंत्रंसमुच्चार्यश्रीकृष्णंतर्पयाम्यहं ॥ ७४॥

चविंशतिसंख्यातोदशधावात्रिधापिवा ॥ मूलमंत्रंसमुच्चार्यश्रीकृष्णंतर्पयाम्यहं ॥ ७४॥

नमोंतोऽयंमनुःप्रोक्तस्तर्पणेविधितत्परैः ॥ ऊर्जितोजायतेमंत्रस्तर्पणान्नात्रसंशयः ॥७५॥ सायान्हेवरदांदेवींगायत्रींसंस्मरेद्यातिः ॥ शुक्लांशुक्लांबरधरांवृषासनकृताश्रयां ॥७६॥ त्रिनेत्रांवरदांपाशंशूलंचनृकरोटिकां ॥ सूर्यमंडलमध्यस्थांध्यायन्तद्ध्यानमभ्यसेत् ॥ ७७ ॥ पूजार्थंजलमादायसूर्येतीर्थानियोजयेत्॥स्मृत्वाज्योतिर्मयंविष्णुंगायत्रींमनसास्मरन् ॥७८॥ शतावृत्याजपेत्तांतुधर्मकामार्थसिद्धये ॥ सर्वेपापाःक्षयंयांतिज्ञानमुत्पद्यतेऽचिरात् ॥ ७९ ॥ मूलमंत्रंह्रदिस्मृत्वापायाद्यैयागमंडपं ॥ हस्तौपादौचप्रक्षाल्यआचम्यवाग्यतःशुचिः ॥८०॥ सूर्यपूजांततःकुर्याद्विशेषेणतुदीक्षितः ॥ पुनर्हस्तौचपादौचप्रक्षाल्यविधिनायतिः ॥ ८१ ॥ आचमनंततःकुर्याद्विशेषाद्वैष्णवान्वये ॥ केशवाद्यैस्त्रिभिःपीत्वाद्वाभ्यांप्रक्षालयेत्करौ ॥८२॥ द्वाभ्यामोष्ठौचसंमृज्यद्वाभ्यांमृज्यान्मुखंततः ॥ एकेनहस्तंप्रक्षाल्यपादावपितथैकतः॥ ८३॥ संप्रोक्ष्यैकेनमूर्धानंततःसंकर्षणादिभिः ॥ आस्यनासाक्षिकर्णांश्चत्त्वाभ्युदरकंभुजौ॥ ८४॥ स्पृशेदेवंभवेदाचमनंवैवैष्णवान्वये ॥ एवमाचमनंकृत्वासाक्षान्नारायणोभवेत् ॥ ८५ ॥ केशवाद्याःपुराप्रोक्तावक्ष्येसंकर्षणादिकान् ॥ संकर्षणोवासुदेवःप्रद्युम्नश्चानिरुद्धकः॥ ८६ ॥ पुरुषोत्तमाधोक्षजनृसिंहाश्चतथाच्युतः ॥ जनार्दनोपेन्द्रहरिविष्णवोद्वादशेरिताः ॥ ८७ ॥ एषांस्मरणमात्रेणतत्वज्ञानंविजृंभते ॥ ८८ ॥ इतिश्रीगौतमीयतन्त्रेसप्तमोऽध्यायः॥ ७॥

अथद्वादशशुद्धीश्चवैष्णवानामिहोच्यते ॥ गृहोपसर्पणंचैवतथानुगमनंहरेः ॥ १ ॥ भक्त्या प्रदक्षिणंचैवपादयोःशोधनंपुनः ॥ पूजार्थंपत्रपुष्पाणांभक्त्यैवोत्तारणंहरेः ॥ २ ॥ सतांच रणसेवाचकरयोःशुद्धिरिष्यते ॥ तन्नामकीर्तनंचैवगणानामपिकीर्तनं ॥ ३ ॥ भक्त्याश्रीकृ ष्णदेवस्यवचसःशुद्धिरिष्यते ॥ तत्कथाश्रवणंचैवतस्योत्सवनिरीक्षणं ॥ ४ ॥ श्रोत्रयोर्नेत्र योश्चैवशुद्धिःसम्यगिहोच्यते ॥ पादोदकस्यनिर्माल्यमालानामपिधारणं ॥ ५ ॥ उच्यतेशि रसःशुद्धिःप्रणतस्यहरेःपुनः ॥ आघ्राणंगंधपुष्पादेर्निर्माल्यस्यतपोधन ॥ ६ ॥ विशुद्धिः स्याद्वैष्णवानांघ्राणस्यापिविधीयते ॥ पत्रपुष्पादिकंयच्चकृष्णपादयुगार्चितं ॥ ७ ॥ तदे कंपावनंलोकेतद्धिसर्वंविशोधयेत् ॥ वृंदावनंततोध्यायेत्पूर्वोक्तेनैववर्त्मना ॥ ८ ॥ तन्मध्ये स्वर्णभूमिंचध्यायेन्नवगृहंततः ॥ ततोगृहद्वारियजेत्पार्षदान्विघ्नशांतये ॥९ ॥ पूर्वद्वारित तोगत्वासामान्यार्घ्यंविशोधयेत् ॥ अस्त्रेणशंखंप्रक्षाल्यतन्मंत्रेणप्रपूरयेत् ॥ १० ॥ मंत्रयेत् प्रणवेनैवसामान्यार्घ्यमिदंस्मृतं ॥ द्वारिबाह्येयजेत्तत्रसर्वविघ्नोपशांतये ॥११॥ नंदंसुनंदंप्रा ग्द्वारिदक्षेचंडप्रचंडकौ ॥ भद्रंसुभद्रंपश्चांतेबलंप्रबलमुत्तरे ॥ १२ ॥ द्वौद्वौविघ्नौप्रतिद्वारेपर तोविनतासुतं ॥ प्रणवादिनमोंतेननाममंत्रेणपूजयेत् ॥ १३ ॥ ततोऽक्षतान्समादायदक्षे नाराचमुद्रया ॥ प्रक्षिपेदस्त्रमंत्रेणगृहांतर्विघ्नशांतये ॥ १४ ॥ अपसर्पंतुतेभूतायेभूताभूमि

नाराचमुद्रया ॥ प्रक्षिप[illegible] ॥ १४ ॥ अपसर्पंतुतभूतायेभूताभूमि


संस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥ १५ ॥ भूतसंघान्समुत्सार्यदक्षपा
दपुरःसरं ॥ ध्यायन्विष्णुंगृहाभ्यंतःप्रविशेन्नतकंधरः ॥१६॥ यजेत्तत्रैवब्रह्माणंवास्तुदोषोप
शांतये ॥ प्राङ्मुखःसंयतात्माचसंविशेद्विहितासने ॥ १७ ॥ तथामृद्वासनेमंत्रीकृष्णा
जिनकुशोत्तरे ॥ काष्ठासनेभवेद्रोगोवंशेवंशक्षयोभवेत् ॥ १८ ॥ शिलासनेचवाग्रोधःपल्ल
वेमतिविभ्रमः ॥ धरण्यांदुःखसंभूतिःपीडनंराजतोभवेत् ॥ १९ ॥ पृथ्वींविष्णुकलांनत्वा
ततःपूर्वमुखोभवेत् ॥ गंधपुष्पादिपात्राणिस्वदक्षेचनिवेशयेत् ॥ २० ॥ दीपावलिंचपरितोनै
वेद्यंपुरतोन्यसेत् ॥ पद्मासनंस्वस्तिकंवाआचार्यविधिनाविशेत् ॥ २१ ॥ ऊर्वोरुपरिवि
न्यस्यसम्यक्पादतलेउभे ॥ पद्मासनमिदंप्रोक्तंयोगिनांहृदयंगमं ॥ २२ ॥ जानूर्वोरंतरे
कृत्वासम्यक्पादतलेउभे ॥ ऋजुकायोविशेद्योगीस्वस्तिकंतत्प्रचक्षते ॥ २३ ॥ मंगलां
कुरपात्राणिचतुर्दिक्षुनिवेशयेत् ॥ आशीर्वाग्भिर्द्विजातीनांवैष्णवंयागमारभेत् ॥ २४ ॥
शिष्यःसंवृणुयाद्भक्त्याआचार्यंभक्तितत्परः॥वासोलंकारविभवैर्वित्तशाठ्यविवर्जितः॥२५॥
ऋत्विजोवृणुयात्तत्रदशपंचत्रयंतथा ॥ पुण्याहंवाचयित्वाथपंचघोषपुरःसरं ॥ २६ ॥ भूत
शुद्धिंततःकुर्यात्सर्वात्मानिविशुद्धये ॥ कृतांजलिपुटोभूत्वावामेगुरुत्रयंयजेत् ॥ २७ ॥
गुरुंचपरमादिंचपरात्परगुरुंतथा ॥ दक्षपार्श्वेगणेशंचमूर्ध्निदेवंविभावयेत् ॥ २८ ॥ ततोसं

डपमध्येतुसुस्थंडिलंगोमयांबुना ॥ उपलिप्ययथान्यायंतस्यमध्येनिधापयेत् ॥ २९ ॥ सूत्रं
प्राक्प्रत्यगग्रंचविप्राशीर्विचनैःसह ॥ गुणितेनाभितोमत्स्यान्मध्यारभ्यप्रविन्यसेत् ॥ ३० ॥
तन्मध्येस्थितयाम्योदगग्रंसूत्रंनिपातयेत् ॥ ततोमध्यान्न्यसेद्धस्तमानमात्रंदिशंप्रति ॥३१॥
सूत्रेषुमकरन्न्यस्येदष्टौवान्यतमःपुमान् ॥ सूत्राग्रमकरेभ्यश्चन्यसेत्कोणेषुमत्स्यकान् ॥३२॥
कोणमत्स्यस्थिताग्राणिदिक्षुसूत्राणिपातयत् ॥ ततोभवेच्चतुष्कोष्ठंचतुरस्रंतुमंडलं ॥३३॥
तत्राग्निमारुतंसूत्रंनैऋतैशंचपातयेत् ॥ प्राग्याम्यवरुणोदीच्यसूत्राग्रमकरेषुच ॥३४ ॥ नि
हिताग्रलग्नसूत्रंचतुष्केप्रतिपादयेत् ॥ एवंकृतेभवेयुस्तेकोणकोष्ठेषुमत्स्यकाः ॥ ३५ ॥ एतेु
षुप्राग्वद्वरुणयाम्योदीच्यांनिपातयेत् ॥ षट्पंचाशत्पदानिस्युरधिकानिशतद्वयात् ॥ ३६ ॥
यदातदाधोविभजेत्पदानिक्रमशःसुधीः ॥ पदैःषोडशकैर्मध्येपद्मंवृत्तत्रयान्वितं ॥३७॥ तैरष्ट
चत्वारिंशद्भिःस्याद्राशीवीथिशोभितिः ॥ सद्वादशैःपदशतैःशोभाख्याःस्युश्चतुःपदाः ॥३८॥
चतुष्पदाश्चोपशोभाःषट्पदैर्द्वारकोणके ॥ वृत्तवीथ्योरारचयेन्मध्येसूत्रचतुष्टयं ॥ ३९॥ प्रा
ग्याम्यवारुणोदच्यिातद्ववेद्राशिमंडलं ॥ कर्णिकायाःकेशराणांदलसंधेर्दलस्यच ॥ ४० ॥
दलाग्रवृत्तराशीनांवीथ्याःशोभोपशोभयोः ॥ वृत्तानिचतुरस्राणिव्यक्तंस्थानानिकल्पयेत्
॥ ४१ ॥ भवेन्मंडलमूर्द्धार्द्धकर्णिकाचतुरंगुला ॥ द्व्यंगुलानिकेसराणिसंधिश्चचतुरंगुलः

॥ ४१ ॥ भवेन्मंडलमूर्द्धार्द्धकर्णिकाचतुरंगुला ॥ द्व्यंगुलानिकेसराणिसंधिश्चचतुरंगुलः

॥ ४२ ॥ दलानांकर्णिकामानादग्रंद्व्यंगुलकंभवेत् ॥ अंतरालंपृथग्वृत्तत्रयेद्व्यंगुलमुच्यते ॥ ४३ ॥ ततश्चराशिचक्रंस्यात्स्वस्ववर्णविभूषितं ॥ राशिमंडलकंकुर्यात्षड्भिरष्टाभिरेववा ॥ ४४ ॥ द्वात्रिंशदंगुलंह्येतत्परत्वात्तावदिष्यते ॥ वृत्तंचक्रमुशंत्येकेचतुरस्रंतुतद्विदः ॥ ४५ ॥ यदिवावर्तुलमवायुश्चद्वादशराशयः ॥ तेस्युःपिपीलिकामध्यामातुलिंगनिभाअपि ॥ ४६ ॥ चतुरस्रंभवेयस्माच्चक्रंद्वादशराशयः ॥ भवेयुःपंकजदलनिभावाकथिताबुधैः ॥ ४७ ॥ तद्बहीरुचिरान्कुर्याच्चतुरःकल्पशाखिनः ॥ ललितानिरूढकुसुमान्दलपल्लवशोभितान् ॥ ४८ ॥ जलजैःस्थलजैश्चापिसुमनोभिःसमानितान् ॥ हंससारसकारंडशुकभ्रमरकोकिलैः ॥४९॥ मयूरचक्रवाकाद्यैरारूढविटपाँश्चतान् ॥ सर्वर्तुनिर्वृतिकरान्विलोचनमनोहरान् ॥ ५० ॥ तद्बहिःपार्थिवंकुर्यान्मंडलंकृष्णकोणकम् ॥ मंडलानितुतत्वज्ञो राश्यंतान्येवकारयेत् ॥ ५१ ॥ राश्यादन्यत्ररचयेत्प्रमाणादन्यमंडलं ॥ आवाह्यदेवतामन्यामर्चयत्यन्यदेवतां ॥ ५२ ॥ उभाभ्यांलभतेशापंमंत्रीतरलदुर्मतिः ॥ कालात्मकस्यदेवस्यराशिव्याप्तिमजानता ॥५३॥ कृतंसमस्तंव्यर्थंस्यादज्ञेनज्ञानमानिना ॥ तस्मात्सर्वप्रयत्नेनराशीन्साधिपतीन्यजेत् ॥ ५४ ॥ अवराणिचरूपाणिमंडलानिचमान्यधीः ॥ उपक्रमेदर्चयितुंहोतुंवासर्वदेवतां ॥ ५५ ॥ रजांसिपंचवर्णानिपंचद्रव्यात्मकानिच ॥ पीतशुक्लारु

णकृष्णश्यामान्येतानिभूतले ॥ ५६ ॥ हारिद्रंस्यात्तथापीतंतांडुलंचसितंभवेत् ॥ तथादो
षारजःक्षारसंयुक्तंरक्तमुच्यते ॥ ५७ ॥ कृष्णंदग्धपलालोत्थंश्यामंबिल्वदलादिकं ॥ सिते
नरजसाकार्यासीमारेखाविपश्चिता ॥ ५८ ॥ अंगुलोत्सेधविस्ताराप्रशस्तासर्वकर्मसु ॥
पीतास्यात्कर्णिकाशुक्लपीतरक्ताश्चकेसराः ॥५९॥ जलान्यब्जस्यांतरालंश्यामचूर्णेनपूरयेत् ॥
सितरक्तासितैर्वर्णैर्वृत्तत्रयमुदीरितं ॥ ६० ॥ नानावर्णविचित्रास्युश्चित्राकाराश्चवीथयः ॥
द्वारशोभोपशोभास्युःसितरक्तनिशासिताः ॥ ६१ ॥ राशिचक्रावशिष्टानिकोणान्यग्रेषुया
नि वै ॥ पीठपादानितानिस्युरसितान्यरुणानिवा ॥ ६२ ॥ अथारुणानिदलानिदलसंधिर
चितानिवै ॥ असितारुणरजसाविहितान्यपरेजनाः ॥ ६३ ॥ इतिश्रीगौतमीयतन्त्रे नारद
प्रोक्ते अष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
पंचगव्येनतद्देहमंडलंचविशोधयेत् ॥ पलमात्रंदुग्धभागोगोमूत्रंतावदिष्यते ॥ १ ॥ घृतं
चपलमात्रंस्याद्गोमयंतोलकद्वयं ॥ दधिप्रसृतिमात्रंस्यात्पंचगव्यमिदंस्मृतं ॥ २ ॥ अथ
वापंचगव्यानांसमानोभागइष्यते ॥ मूलमंत्रेणसंमंत्र्यकुशाग्रेणैवशोधयेत् ॥ ३ ॥ तेनसर्ववि
शुद्धिःस्यात्सर्वपापनिकृंतनं ॥ महांतिपातकान्येवकृत्वागव्यंपिबेद्यदि ॥ ४ ॥ नाशयेत्पा
नमात्रेणइत्यूचुर्वेदवेदिनः ॥ भूतशुद्धिंततःकुर्याद्येनपूर्वफलंलभेत् ॥ ५ ॥ ओंनमोसुदर्शा

नमात्रेणइत्यूचुर्वेदवेदिनः ॥ भूतशुद्धिंततःकुर्याद्ध्यानपूर्वमतःपरम् ॥ ५ ॥ ओंनमोसुदर्श

नायेत्युक्त्वास्त्रेणचदेशिकः ॥ तालत्रयंसंविदध्यादूर्ध्वोर्ध्वंचसमाहितः ॥ ६ ॥ दिग्बंधनंछोटि
काभिर्दशभिःकारयेत्सुधीः ॥ ततस्तेनैवजनितंतेजोरक्षात्विविति स्मरेत् ॥ ७ ॥ विनिधायक
रौस्वांकेउत्तानौपरिचिंतयेत् ॥ हुंकारेणसमुत्थाप्यशक्तिंस्वाधारसंस्थितां ॥ ८ ॥ मुलाधार
मथस्वाधिष्ठानंचमणिपूरकं ॥ अनाहतंविशुद्धंचआज्ञाचक्रंचचिंतयेत् ॥ ९ ॥ गुदेचध्वज
मूलेचनाभौहृदयएवच ॥ कंठदेशेभ्रुवोर्मध्येयथाक्रममनुस्मरेत् ॥ १० ॥ चिंतयेत्पुनराधा
रंकनकाब्जंचतुर्दलं ॥ तन्मध्येचिंतयेद्योनिंचंद्रार्काग्निसमन्वितां ॥ ११ ॥ तदंतश्चिंतयेन्मं
त्रीजीवात्मानंसमाहितः ॥ जपाबंधूकसदृशंतडित्कोटिसमप्रभं ॥ १२ ॥ सूर्यकोटिप्रती
काशंचंद्रकोटिसुशीतलं ॥ प्रदीपकलिकाकारंकुंडलिन्यासमंतथा ॥ १३ ॥ सुषुम्नावर्त्म
नासोऽहमितिमंत्रेणयोजयेत् ॥ सहस्रारेशिरःस्थानेपरमात्मनिदेशिकः ॥ १४ ॥ तत्रैवपंच
भूतानिसंहारक्रमतस्तथा ॥ वाक्पाणिपादपायूपस्थावचनादानमेवच ॥ १५ ॥ गतिर्वि
सर्गानंदश्चश्रोत्रत्वक्चक्षूरसनाः ॥ नासाशब्दस्तथास्पर्शरूपंरसोऽपिगंधकः ॥ १६ ॥ तत्वा
न्येतानिपंचविंशत्पुरुषेणवियोजयेत् ॥ अहंकारंमनोबुद्धिंचित्तंतत्रैवयोजयेत् ॥ १७ ॥
बीजभावेनलीनानिसर्वाणिपरिचिंतयेत् ॥ धूम्रवर्णंततोवायुबीजंषड्बिंदुलांछितं ॥ १८ ॥
पूरयेदिडयावायुंसुधीःषोडशमात्रया ॥ मात्रायाश्चचतुःषष्ठ्याकुंभयेत्तंसुषुम्णया ॥ १९ ॥

द्वात्रिंशन्मात्रयामंत्री रेचयेत्पिंगलाख्यया ॥ पूरयेदनयाचैवसंचिंत्यलीनमारुतं ॥ २० ॥
रक्तवर्णवन्हिबीजंत्रिकोणंस्वस्तिकान्वितं ॥ तेनपूरकयोगेनमात्रयाषोडशाख्यया ॥२१॥
चतुःषष्ठ्यामात्रयाचानिर्वहेत्कुंभकेनच ॥ वामपार्श्वेस्थितंपापपुरुषंकज्जलप्रभं ॥ २२॥ ब्रह्म-
हत्याशिरस्कंचस्वर्णस्तेयभुजद्वयं ॥ सुरापानहृदायुक्तंगुरुतल्पकटिद्वयं ॥ २३ ॥ तत्संस
र्गिपदद्वंद्वमंगप्रत्यंगपातकं ॥ उपपातकरोमाणंरक्तश्मश्रुविलोचनं ॥ २४ ॥ खड्गचर्मध
रंक्रूरंकुक्षौतत्रविचिंतयेत् ॥ अंगुष्ठपरिमाणंत्वधोमुखंकृष्णवर्णकं ॥ २५ ॥ मूलाधारोत्थि
तेनैववन्हिनानिर्दहेच्चतं ॥ एवंसंचिंत्यपरितोद्वात्रिंशन्मात्रयाततः ॥ २६ ॥ भस्मनासहि
तंमंत्री रेचयेत्पिंगलाध्वना ॥ नामनाड्यांचन्द्रबीजंकुंदेन्दुयुतसप्रभं ॥२७॥ भालेन्दुबिंबे
संयोज्यततःषोडशमात्रया ॥ सुषुम्णयाचतुःषष्ठिमात्रयाबीजमैन्दवं ॥२८॥ ध्यात्वाऽमृतम
यींवृष्टिंपंचाशद्वर्णरूपिणीं ॥ तयादेहेविचिंत्यैवंमनसापिंगलाध्वना ॥ २९॥ द्वात्रिंशन्मा
त्रयामंत्रीलिंबीजेनदृढंतपेत् ॥ स्वस्थानेहंसमंत्रेणपुनस्तेनैववर्त्मना ॥ ३० ॥ जीवंतत्वानि
चानीयस्वस्थानेस्थापयेत्ततः ॥ इतिकृत्वाभूतशुद्धिंमातृकान्यासमाचरेत् ॥ ३१ ॥ गौ
तमउवाच ॥ भूतशुद्ध्यावदब्रह्मन्कस्यशुद्धिःप्रजायते ॥ नात्मनःसर्वशुद्धीनांकारणंसातुक
थ्यते ॥ ३२ ॥ नजीवस्यब्रह्मणाचसहैक्यंतस्यनित्यशः ॥ नदेहस्यतदारभ्यनित्यतातस्य

थ्यते ॥ ३२ ॥ नजीवस्यब्रह्मणाचसहैक्यतस्यनित्यशः ॥ नदेहस्यतदारभ्यनित्यतातस्य

कथ्यते ॥ ३३ ॥ मनसोनापिबुद्धेश्चकस्यस्यादिहशोधनं ॥ इत्यादिसंशयंछिंधित्वांहिब्रह्म
समःस्वतः ॥ ३४ ॥ नारदउवाच ॥ शरीराकारभूतानांभूतानांयद्विशोधनं ॥ अव्ययब्रह्म
संयोगाद्भूतशुद्धिरियंमता ॥ ३५ ॥ अंतःकरणमध्येतुज्योतिरात्माप्रवर्तते ॥ लिंगदेहंतुतंप्रा
हुर्योगिनस्तत्ववादिनः ॥ ३६ ॥ तस्यशोधनमात्रेणसर्वशुद्धिःप्रजायते ॥ तदेवविश्वज
नकःकारणंजन्मकारणं ॥ ३७ ॥ तद्वियोगेभवेन्मुक्तिर्नान्यथाजन्मकोटीभिः ॥ इत्येतत्क
थितंसर्वपुरुषार्थस्यानिर्णयं ॥ ३८ ॥ योगाद्यभ्यासयोगेनमंत्राभ्यासेननाशयेत् ॥ भूतशुद्धिं
विधायेत्थंयोगीस्याद्देशिकोत्तमः ॥ ३९ ॥ न्यासंदेहस्यसन्नाहंविदधीतानुपूर्वशः ॥ भूतशुद्धि
र्मातृकाचकेशवाद्यातथाचसा ॥ ४० ॥ तत्वन्यासंतथाकुर्यात्प्राणायामस्ततःपरं ॥ पीठ
न्यासंतथाकृत्वादशतत्वंतथाचरेत् ॥ ४१ ॥ विष्णुपंजरनामानमित्युक्तःक्रमसंग्रहः ॥ तथा
र्घ्यस्थापनंकुर्याद्यथावदनुपूर्वशः ॥ ४२ ॥ स्ववामाग्रेचतुरस्रंमंडलंपरिचिंतयेत् ॥ पुष्पैर
भ्यर्च्यतन्मंत्रीतत्राधारंप्रतिष्ठयेत् ॥४३॥ 'मँवन्हिमंण्डलायनमो' मंत्रोयंतस्यचेष्यते ॥ वृत्ता
कारेणतत्रैववन्हेर्दशकलायजेत् ॥ ४४ ॥ धूम्रार्चिरूष्माज्वलिनीज्वालिनीविस्फुलिंगि
नी ॥ सुश्रीःसुरूपाकपिलाहव्यकव्यवहाअपि ॥ ४५ ॥ वन्हेर्दशकलाःप्रोक्ताःसर्वधर्महि
तप्रदाः॥शंखमस्त्रांभसाप्रोक्ष्यस्थापयेत्तत्रमंत्रवित् ॥४६॥ 'अँअर्कमंडलायनम' इत्येवंपरि

पूजयेत् ॥ वृत्ताकारेणतत्रैवकलाद्वादशपूजयेत् ॥ ४७ ॥ 'कंभंतापिन्यै' इत्युक्त्वा 'खंबंतापि निकां' तथा ॥ गंफमुच्चार्यधूम्रायैनमोंतंपरिपूजयेत् ॥ ४८ ॥ घंपंमरीचिमुच्चार्यङंनंज्व लिनिकांतथा ॥ चंधंरुचिंसमभ्यर्च्यछंदंसुषुम्णांपूजयेत् ॥ ४९ ॥ जंथंचभोगदायुक्तंपूज येत्कुसुमाक्षतैः ॥ ऋंतंविश्वांसमभ्यर्च्यचंणंचबोधिनींन्यसेत् ॥ ५० ॥ टंढंधारिणिकांत द्वत्ठंडंक्षेमांप्रपूजयेत् ॥ आदित्यस्यकलाःपूज्यापूर्ववत्सलिलादिभिः ॥ ५१ ॥ नमोंते नैवमन्त्रेणचतुर्थीप्रत्ययान्विताः ॥ एवंशंखंसमभ्यर्च्यकलाःसौर्योधनप्रदाः ॥ ५२ ॥ वि लोममातृकांजप्त्वास्वष्टंमंत्रंतथासुधीः ॥ पयसातीर्थजेनैवपूरयेच्छंखमुत्तमं ॥ ५३ ॥ ऊमि त्यक्षरमन्त्रेणचंद्रंतत्रप्रपूजयेत् ॥ अमृतामानदापूषातुष्टिःपुष्टीरतिर्धृतिः ॥ ५४ ॥ शङ्कि नीचंद्रिकाकांतिर्ज्योत्स्नाश्रीनीतिरंगदा ॥ पूर्णाऽपूर्णामृताचेतिकलाःषोडशकामदाः॥५५॥ षोडशस्वरयोगेननमोंतेनप्रपूजयेत् ॥ तत्राक्षतादिपुष्पाणिसदूर्वाणिविनिक्षिपेत् ॥ ५६ ॥ वामेनाच्छाद्यहस्तेनषडंगंदक्षहस्ततः ॥ दशकृत्वोजपेन्मूलंगालिनींशिखयान्यसेत् ॥५७॥ करौप्रसार्यचान्योन्यंसंपुटक्रमयोगतः ॥ प्रयोज्यदक्षिणांगुष्ठंतथावामंकनिष्ठया ॥ ५८ ॥ वामयादक्षिणांगुष्ठंमुद्रेयंगालिनीमता ॥ अर्घ्यस्यफलदाप्रोक्ताशंखस्योपरिचालिता ॥५९॥ गंधादिभिःसमभ्यर्च्यकृष्णाख्यंधामयोजयेत् ॥ अस्त्रेणैवतुसंरक्ष्यधेनुंयोनिंप्रदर्शयेत् ॥ ६०॥

तद्दक्षिणेतुशंखस्यताम्रंवामार्तिकंतथा ॥ पात्रमेकंनिधायाथतथातोयेनपूरयेत् ॥ ६१ ॥
ताम्रपात्रंचविप्रर्षेविष्णोरतिप्रियंमतं ॥ तथैवसर्वपात्राणांमुख्यंशंखंप्रकीर्तितम् ॥ ६२ ॥
मृत्पात्रंचतथाप्रोक्तंस्वार्णवाराजतंतथा ॥ पंचपात्रंहरेःशुद्धंनान्यंतत्रानियोजयेत् ॥ ६३ ॥
मुख्यपात्रोद्धृतंतोयंकिंचित्तत्रप्रयोजयेत् ॥ तेनामृतेनसर्वत्रद्रव्यंमंत्रमयंभवेत् ॥ ६४ ॥
ततोधर्मादिभिर्मंत्रीगात्रेपीठानिविन्यसेत् ॥ गंधाक्षतैःसुकुसुमैःपवित्रैर्जलयोजितैः ॥६५॥
इतिपीठंसमभ्यर्च्यध्यायेन्मंत्रात्मदेवतां ॥ मूलादिब्रह्मरंध्रांतांबिसतंतुस्वरूपिणीं ॥ ६६ ॥
कुंडलींत्रिविधांतत्रतथाबीजाक्षरंत्रिधा ॥ तुरीयांकुंडलींमूर्न्द्धिवासुदेवंतुरीयकं ॥ ६७ ॥
लकारंमूलदेशेचद्रवत्स्वर्णनिभंस्मरेत् ॥ मूलादिहृदयंयावत्वन्हिकुंडलिनींतथा ॥ ६८ ॥
हृदयेकामबीजंचसूर्यायुतसमप्रभां ॥ हृदयाद्गलपर्यंतंध्यायेदव्याकुलःसुधीः ॥ ६९ ॥ भ्रूम
ध्याद्ब्रह्मरंध्रांतंमायाबिंदुद्युतिप्रभां ॥ चंद्रकुंडलिनींतद्वत्स्रवदमृतविग्रहां ॥ ७० ॥ बिंदुना
दमयंवासुदेवंबिदौतुरीयकं ॥ देशकालाद्यवच्छिन्नंसर्वतेजोमयंस्मरेत् ॥ ७१ ॥ तुर्यकुंड
लिनींतद्वत्केवलांज्ञानविग्रहां ॥ एवंध्यात्वापुनर्बीजंसंपूर्णमनसास्मरेत् ॥ ७२ ॥ चिदानं
दमयंस्वच्छंएकात्मकंतथागुरोः ॥ ७३ ॥ ध्यात्वाध्यात्वापुनर्ध्यात्वासहजानंदविग्रहं ॥
विडंच्युतसुधाभिस्तुतर्पयेच्चपुनःपुनः ॥ ७४ ॥ अंतर्यागइतिप्रोक्तोजीवन्मुक्तिप्रदायकः ॥

मुनीनांचमुमक्षूणामधिकारोऽत्रकेवलं ॥७५॥ अथवामानसैर्द्रव्यैःप्रकटैरपिसंयजेत् ॥ ध्यात्वाहृत्पद्ममध्येतुवासुदेवंयथोदितं ॥ ७६ ॥ स्वागताद्यैरुपचरेत्पाद्याद्यैर्वस्त्रभूषणैः ॥ गंधपुष्पैर्धूपदीपैर्नैवेद्यैर्विधिनामुना ॥७७॥ पुष्पांजलीन्ततोदत्वावनमालांनिवेदयेत् ॥ अथवावाद्यसंभूतैःप्रकटैरर्चयेत्प्रभुं ॥ ७८ ॥ स्वागताद्यैर्नैवेद्यांतैरात्माभेदेनपूजयेत् ॥ चंदनागरुनिष्यंदचर्चितांगःस्वयंगुरुः ॥ ७९ ॥ विष्णुपंजरमन्त्रेणतत्तत्स्थानेविधानवित् ॥ रचयेत्तिलकंभक्त्याप्रदीपकलिकानिभं ॥ ८० ॥ पुष्पांजलिंपंचकृत्वोविधिवत्तनुयाद्गुरुः ॥ तुलसीयुगुलंपादद्वयेदक्षिणवामके ॥ ८१ ॥ हस्तादियुगलेपार्श्वद्वयेगंधद्वयान्वितं ॥ पद्मयुग्मंमूर्न्धिदेशेमूलेनदक्षवामके ॥ ८२ ॥ षड्भिःसर्वतनौन्यसेत्पुनःसर्वैश्चसर्वतः ॥ एकंपंचांजलिःप्रोक्तोहरिसान्निध्यकारकः ॥ ८३ ॥ श्रीखंडंदक्षिणेदद्यात्सितपुष्पेणसंयुतं ॥ मूर्न्धिदेशेपद्मयुग्मंगंधयुक्तंनिवेदयेत् ॥ ८४ ॥ हृदयेऽसितपुष्पंचकस्तूरीरससंयुतं ॥ वामेंगेचंदनंदद्यात्तथारक्तेनसंयुतं ॥ ८५ ॥ सर्वपुष्पांजलिंदद्यात्सर्वगंधसमन्वितं ॥ दक्षिणेवासुदेवाख्यंस्वच्छचैतन्यमव्ययं ॥ ८६ ॥ वामेचरुक्मिणिंनित्यांरजोगुणमयींशुभां ॥ तेनसत्वरजोरूपंस्वात्मानंचिंतयेद्गुरुः ॥ ८७ ॥ मूलमंत्रंजपन्बुध्यासुषुम्णामूलदेशके ॥ मंत्रार्थंतस्यचैतन्यंबीजंध्यात्वापुनःपुनः ॥ ८८ ॥ उदयादिलयांतंचमंत्रमेवसमभ्यसेत् ॥

मंत्रार्थतस्यचैतन्यंबीजंध्यात्वापुनःपुनः ॥ ८८ ॥ उदयादिलयांतंचमंत्रमेवसमभ्यसेत् ॥

उदयःशब्दरूपश्चलयश्चार्थःप्रकीर्तितः ॥ ८९ ॥ ज्ञातृज्ञानविभागेनतन्मयोभवगौतम ॥ मनःसंहरणंशौचंमौनंमंत्रार्थचिंतनं ॥ ९० ॥ अव्यग्रत्वमनिर्वेदंजपसंपत्तिहेतवः ॥ एवंते कथितंसम्यक्त्रिविधंयजनक्रमम् ॥ ९१ ॥ यान्कृत्वासंप्रदायेनमंत्रीवांछितमश्नुते ॥ अथमंडलमध्येतुपूजनंबाह्यगोचरं ॥ ९२ ॥ आरभेत्प्रकटैर्द्रव्यैर्नानारससुविस्तरैः ॥ पाद्यार्घ्याचमनीयानिपात्राणिचस्वदक्षिणे ॥९३॥ संस्थाप्यउक्तद्रव्येणपूजितानितुदेशिकः ॥ अर्घ्यस्यत्रीणिपात्राणिपाद्यस्यापित्रयंभवेत् ॥ ९४ ॥ तथाचाचमनीयानिपात्राणिचविभागशः ॥ तथाकारणदौर्बल्यादेकमेवप्रचक्षते ॥९५॥ पूरयेद्विधिनामंत्रीमंडलंशुभतंदुलैः ॥ शुद्धैरेवाक्षतैःसम्यक्यावत्पंकजमंडलं ॥ ९६ ॥ कुशान्विस्तीर्यतत्रैवपंकजंविष्टरान्वितं ॥ पुष्पाणिचविकीर्याथकुंभस्थापनमाचरेत् ॥९७॥ हैमंरौप्यंताम्रमयंमार्तिकंवास्वशक्तितः ॥ वित्तशाठ्यंनकुर्वीतकृतेऽनिष्टमवाप्नुयात् ॥ ९८ ॥ द्वात्रिंशदंगुलंकुंभंविस्तारोन्नतशालिनं ॥ षोडशद्वादशांगुल्यमतोन्यूनंनकारयेत् ॥ ९९ ॥ पौरस्त्रीनिर्मितैःसूत्रैर्विधिवत्त्रिगुणीकृते ॥ तेनसंवेष्ट्यपरितोयथानक्षरतेक्वचित् ॥ १०० ॥ भग्नेमृत्युःसाधकस्यक्षरणेचापदांपदं ॥ तस्माद्दोषंप्रविज्ञायकुर्यात्सर्वमतंद्रितः ॥ १०१ ॥ प्रक्षाल्यतत्तन्मंत्रेणगंधैःपरिमलान्वितैः ॥ वेदविद्भिर्द्विजैःसार्द्धंस्थापयेत्तारमुच्चरन् ॥ २ ॥ दुग्धवृक्षत्वचांतोयैरथवाप्यक्षरौषधैः ॥ वि

ष्गुगंधाष्टकैर्त्रांथतीर्थोदकैस्तुपूरयेत् ॥ ३ ॥ चंदनागरुह्रीबेरकुष्टकुंकुमरोचनाः ॥ जयमा सीसुरामितिविष्णुगंधाष्टकंस्मृतं ॥४॥ गंधाष्टकमिदंत्वर्घ्यंविष्णोःसान्निध्यकारकं ॥ वन्हि रूपमथाधारंकलाभिःसहपूजयेत् ॥ ५ ॥ तथासूर्यमयंकुंभंतत्कलाभिःप्रपूजयेत् ॥ जलं सोममयंतद्वत्कलाभिश्चसमर्पयेत् ॥ ६ ॥ तेजस्त्रयमिदंप्रोक्तंजलंतदात्मकंस्मृतं ॥ विलो ममातृकावर्णैःसर्वत्रपूरणंस्मृतं ॥ ७ ॥ तथामूलंसमुच्चार्य्यपूरयेद्विगतामयः ॥ तीर्थमन्त्रे णतीर्थानियोजयेत्सूर्यमंडलात् ॥ ८ ॥ बृहच्छंखंतथास्थाप्यस्वपुरोभागएवहि ॥ तत्राधारं प्रतिष्ठाप्यपूजयेद्वन्हिमंडलम् ॥ ९ ॥ ततःशंखंप्रतिष्ठाप्यसूर्यात्मकमथार्चयेत् ॥ प्रादक्षि ण्यक्रमेणैवकलाःसर्वत्रपूजयेत् ॥ १० ॥ विलोममातृकांजप्त्वातथामंत्रंप्रपूरयेत् ॥ तत्रचं द्रकलाःपूज्यप्राणस्थापनपूर्वकं ॥ ११ ॥ आवाहनादिकंकृत्वाकलाएकैकशःक्रमात् ॥ संपूज्यविधिवद्विद्वान्देवसांनिध्यहेतवे ॥१२॥ प्रणवांशोद्भवाःसम्यक्कलास्तत्रप्रपूजयेत् ॥ स्थापनंतेषुसंयोज्यगंधपुष्पादिभिर्यजेत् ॥ १३ ॥ एकैकामृचंवदन्मंत्रीतत्रतत्रजलंक्षिपेत् ॥ पाथस्तेजोमयंतत्रयोजयेद्गुरुसत्तमः ॥ १४ ॥ प्रथमंप्रकृतोहंसःप्रतद्विष्णुरनंतरं ॥ त्र्यंबकं तुतृतीयःस्यात्ताद्विप्रासोचतुर्थकम् ॥ १५॥ विष्णुर्योनिंकल्पयतुपंचमंपरिकीर्तितं ॥ ऋक्पं चकमिदंप्रोक्तंप्रणवांशस्वरूपकं ॥ १६ ॥ तारस्यपंचभेदेभ्यःपंचाशद्वर्णगाःकलाः ॥ सृ

चकमिदंप्रोक्तंप्रणवांशस्वरूपकं ॥ १६ ॥ तारस्यपंचभेदेभ्यःपंचाशद्वर्णगाःकलाः ॥ सृ

ष्टिर्ऋद्धिःस्मृतिर्मेधाकांतिर्लक्ष्मीर्द्युतिःस्थिरा ॥ १७ ॥ स्थितिःसिद्धिरितिप्रोक्ताकचवर्गग
ताःक्रमात् ॥ अकाराद्ब्रह्मणोत्पन्नास्तप्तचामिकरप्रभाः ॥ १८ ॥ एताःकरधृताक्षस्रक्पंक
जद्वयकुंडिकाः ॥ जराचपालिनीशांतिरीश्वरीरतिकामिके ॥ १९ ॥ वरदाल्हादिनीप्रीति
र्दीर्घाःस्युष्टतवर्गजाः ॥ उकाराद्विष्णुनोत्पन्नास्तमालदलसन्निभाः ॥ २० ॥ अभीतिदरच
क्राब्जबाहवःपरिकीर्तिताः ॥ तीक्ष्णरौद्रीभयानिद्रातंद्राक्षुद्बोधिनीक्रिया ॥ २१ ॥ उत्ता
रिणीमृत्युरेताःकथिताःपयवर्गजाः ॥ रुद्रेणमार्णादुत्पन्नाःशरच्चंद्रनिभप्रभाः ॥ २२ ॥ उ
द्वहंत्योऽभयंशूलंकपालंबाहुभिर्बलं ॥ ईश्वरेणोदिताबिंदोःपीताश्वेतारुणासिता ॥ २३ ॥
अनंताश्चषवर्णस्थाजपाकुसुमसन्निभाः ॥ अभयंहरिणंटंकंदधानाबाहुभिर्वरं ॥ २४ ॥ नि
वृत्तिःसंप्रतिष्ठास्याद्विद्याशांतिरनंतरं ॥ इंधिकादिपिकाचैवरेचिकामोचिकावरा ॥२५॥ सू
क्ष्माऽसूक्ष्मामृताज्ञानामृताचाप्यायनीतथा ॥व्यापिनव्योमरूपास्युरनंताःस्वरशक्तयः॥ २६॥
सदाशिवेनसंजातानादादेताःसितत्विषः ॥ अक्षस्रक्पुस्तकगुणाःकपालवरतर्जनीः ॥२७॥
तत्तत्कलाःसमावाह्यकृत्वाप्राणस्यसंयमं ॥ संपूज्यगंधपुष्पाद्यैस्तस्यांतेजलमाहरेत् ॥२८॥
कुंभतेजस्त्रयकलाअष्टत्रिंशज्जपन्ततः ॥ यजेत्कालश्चपंचाशत्प्रणवांशसमुद्भवाः ॥ २९ ॥
ऋक्पंचकंप्रजप्याथजपेन्मूलमनुंतथा ॥ चतुर्णवतिमंत्रोऽयंदेवसान्निध्यकारकः ॥३०॥ नव

रत्नंतद्द्देवनिक्षिपन्मातृकाजपन् ॥ नववर्गमयीचाद्यानवरत्नंतदात्मकं ॥ ३१ ॥ वज्र मौक्तिकपुष्परागंविद्रुमंपद्मरागकम् ॥ नीलंमरकतंचैवमाणिक्यंस्वर्णमेवच ॥ ३२ ॥ नव रत्नमितिप्रोक्तंसर्वदेवाश्रयंमहत् ॥ स्थापयेद्विधिनामंत्रीचपकंफलसंयुतं ॥ ३३ ॥ विष्टरं तन्मुखेदत्वाप्रदद्यात्पंचपल्लवं ॥ शुद्धेनक्षौमयुग्मेनानिर्मलेनांशुकेनवा ॥ ३४ ॥ वेष्टयेद्वि धिनामंत्रीसर्वाश्चर्ययथाभवेत् ॥ वहुमालांततोदद्यात्गंधंचसुमनोहरं ॥ हरिमावाहयेत्तत्रछा यायांकल्पशाखिनः ॥ १३५ ॥ इतिश्रीगौतमीयतन्त्रे नवमोऽध्यायः ॥ ९ ॥ छ

अथपुष्पांजलिकरोमंत्रीसंयमितेन्द्रियः ॥ हृत्पद्मसंस्थितंतेजःकुंडल्यासहमेलयेत् ॥ १ ॥ चिदानंदघनंशुद्धंसर्वतेजोमयंस्मरन् ॥ षड्चक्रभेदनेनैवउन्मन्यासहयोजयेत् ॥ २ ॥ जीं वानंदमयंतत्तुप्राप्तमैश्वर्यमद्भुतं ॥ आराध्यमानसैर्द्रव्यैर्वृहन्नासापुटःक्रमात् ॥ ३ ॥ करस्थ मातृकांभोजेचैतन्यंयोजयेच्चतत् ॥ कुंभमध्येमंत्रमूर्तिमावाह्यपरिपूजयेत् ॥ ४ ॥ 'कृष्णकृ ष्णमहायोगीन्सर्वसत्वहृदास्थित ॥ सर्वत्रसर्वगब्रह्मन्कृपयासन्निधोभव' ॥ ५ ॥ मंत्रेणाने नसंस्थाप्यतत्तन्मुद्राःप्रदर्शयेत् ॥ ऊर्द्ध्वांजलिमधःकुर्यादेवमावाहनीमता ॥६॥ सेयंतुविप रीतास्यान्मुद्रास्थापनकर्मणि ॥ वाह्यांगुष्ठद्वयेमुष्टिमुद्रास्यात्सान्निधायिनी ॥ ७ ॥ अंगुष्ठ गर्भिणीचैवमुद्रास्यात्सान्निरोधिनि ॥ अन्योन्यतर्जनीयुग्मभ्रमणादवगुंठिनी ॥ ८ ॥ आ

वाह्यपंचमुद्राभिःप्राणस्थापनमाचरेत् ॥ पाशांकुशपटाशक्तिस्ततोहंसमनुंवदेत् ॥९॥ कृ
ष्णप्राणाइहप्राणाःकृष्णजीवइहस्थितः॥तस्यसर्वेन्द्रियाण्युक्त्वावाङ्मनश्चक्षुरित्यथ ॥१०॥
इहागत्यसुखंचिरंतिष्ठंतुस्वाहयापुनः ॥ अयंप्राणमनुप्रोक्तःसर्वजीवप्रदायकः ॥ ११ ॥
अनेनतुविहीनायेनिर्जीवामनवःस्मृताः ॥ रहस्यंचास्यगुरुतस्तत्वतोज्ञानवैभवात् ॥१२ ॥
किन्नसिद्ध्यतिविप्रर्षेदेशिकस्यनचान्यथा ॥ मातृकांकेशवाख्यांचतत्वसन्यसनेनवै ॥१३॥
करांगन्यासंतत्वानांन्यसनात्सान्निधिर्भवेत् ॥ सर्वात्मासर्वगोदेवोमंडलाधारधिष्ठितः ॥१४॥
शालग्रामेमणौयंत्रेमंडलेप्रतिमासुच ॥ नित्यपूजाहरेःकार्यानतुकेवलभूतले ॥ १५ ॥ गं
डक्याश्चैकदेशेचशालग्रामस्थलंमहत् ॥ पाषाणंतद्भवंयावत्तच्छालग्राममितिस्मृतं ॥१६॥
शालग्रामशिलास्पर्शात्कोटिजन्माघनाशनं ॥ किंपुनर्यजनंतत्रहरिसान्निध्यकारकं ॥१७॥
शालग्रामैकयजनाच्छतलिंगफलंलभेत् ॥ बहुभिर्जन्माभिःपुण्यैर्यदिकृष्णाशिलांलभेत् ॥
१८ ॥ गोष्पदेनचचिन्हेनतेनपूतोभवेन्नरः ॥ कामक्रोधादिदोषोत्थंसर्वदुःखंलयंव्रजेत् ॥
१९ ॥ यंत्रनिर्धारणेतस्मिन्देवःप्रीणातिपूजितः ॥ पद्ममष्टपलाशंचचतुरस्रंसुलक्षणं ॥२०॥
चतुर्द्वारसमायुक्तंकामगर्भितकर्णिकं ॥ सामान्ययंत्रमुद्दिष्टमष्टादशाक्षरेशृणु ॥ २१ ॥चतु
रस्रंचतुर्द्वारंपद्ममष्टदशान्वितं ॥ षट्कोणमध्यकामाख्यंसप्तदशार्णवेष्टितं ॥ २२ ॥ षडक्ष

रंमनुवरंषट्कोणेविलिखेत्ततः ॥ एतद्यंत्रंमहायंत्रंकृपयाकथितंतव ॥ २३ ॥ अस्यविज्ञानमात्रेणकृष्णात्मासाधकोभवेत् ॥ अखंडमंडलाकारंव्याप्यविश्वंविजृंभते ॥ २४ ॥ सर्वदेवमयंयेनतेनमंडलमुच्यते ॥ प्रतिमाकृष्णदेवस्ययत्नतःकारयेत्सुधीः ॥ २५ ॥ शिल्पिनाकृष्णभक्तेनविश्वकर्मोक्तवर्त्मना ॥ दशपंचांगुलामुख्यामध्यमाद्वादशांगुला ॥ २६ ॥ अष्टांगुलाऽधमासातुन्यूनाधिक्यंनकारयेत् ॥ अज्ञानाद्वाप्रमादाद्वायदिकुर्यान्नराधमः ॥२७ ॥ प्रतिष्ठाविफलातस्यपूजनंनिष्फलंभवेत् ॥ मानांगुलविहीनायाप्रतिमायत्रतिष्ठति ॥ २८ ॥ राजानंपीडयत्तेषांगृहस्थोनरकंव्रजेत् ॥ मानांगुलेनसाकार्यानान्यथामुनिसत्तम ॥ २९ ॥ काश्मीरीज्ञानदाप्रोक्तास्वर्णजापिचमुक्तिदा ॥ संपत्प्रदाशिलाजातारत्नजाबहुभक्तिदा ॥ ३० ॥ वैरीस्तम्भनदालौहीपैत्तलीशत्रुनाशिनी ॥ ताम्रीधर्मविवृद्धिंचकरोतिबहुसौख्यदा ॥ ३१ ॥ मृण्मयीसौख्यदाप्रोक्ताप्रतिमाशुभलक्षणा ॥ भोगदामोक्षदासातुप्रतिमाकथितातव ॥ ३२ ॥ लेप्यालेख्याद्विधाचापिप्रतिमापरिकीर्तिता ॥ पर्वताग्रेनदीतीरेचत्वरेगोष्ठभूमिषु ॥ ३३॥ समुद्रकूलेऽरण्येवामानहीनानदूषणं ॥ कृष्णप्रतिकृतिंकुर्याद्दिव्यांबरसुचिन्हितां ॥ ३४ ॥ समाहितस्ततोमंत्रीपूजयेदुपचारकैः ॥ षोडशोपचारमंत्रेणमंत्रीसर्वसमृद्धये॥ ॥३५ ॥ यस्यदर्शनमिच्छंतिदेवाब्रह्महरादयः ॥ कृपयादेवदेवेशमदग्रेसन्निधोभव ॥ ३६ ॥

॥ ३५ ॥ यस्यदर्शनमिच्छंतिदेवाःस्वाभीष्टसिद्धये ॥ तस्मैतेपरमेशायकल्पयाम्यासनंशुभं ॥ ३६ ॥

तस्यतेपरमेशानआगतंस्वागतंभवेत् ॥ कृतार्थोऽस्म्यनुगृहीतोऽस्मिसफलंजीवितंतुमे ॥ ३७ ॥ यदागतोऽसिदेवेशाचिदानंदमयोऽव्ययः ॥ अज्ञानाद्वाप्रमादाद्वावैकल्यात्साधनस्यच ॥ ३८ ॥ यदपूर्णंभवेत्कृत्यंतत्सर्वंपूर्णतांनय ॥ त्वदंशस्यममेशानकृपयाऽभिमुखोभव ॥ ३९ ॥ पादे श्यामाकदुर्वाद्भिर्विष्णुक्रांताद्भिरिष्यते ॥ यद्भक्तिलेशसंपर्कात्परमानंदसंप्लवं ॥ ४० ॥ तस्य तेपरमेशानपाद्यंशुद्धायकल्पते ॥ जातीलवंगकंकोलैर्दद्यादाचमनीयकं ॥ ४१ ॥ स्वधाम न्त्रेणमतिमान्स्मृत्वावैदक्षिणेकरे ॥ वेदानामपिवेद्यायदेवानांदेवतात्मने ॥ ४२ ॥ आचम नंकल्पयामिस्वधातुशुद्धिहेतवे ॥ गंधपुष्पाक्षतयवकुशाग्रतिलसर्षपैः ॥ ४३ ॥ दूर्वाभिर्देव शिरसिशिरोमन्त्रेणचार्पयेत् ॥ तापत्रयहरंदिव्यंपरमानंदलक्षणं ॥ ४४ ॥ तापत्रयविमो क्षायतवार्घ्यंकल्पयाम्यहं ॥ घृतमधुदधियुक्तंमधुपर्कंस्वधांबुना ॥ ४५ ॥ सर्वकालुष्यहीना यपरिपूर्णस्वधात्मकं ॥ मधुपर्कमिदंदेवकल्पयामिप्रसीदमे ॥ ४६ ॥ मुखेचाचमनंदद्यात्के वलेनजलेनच ॥ उच्छिष्टोऽप्यशुचिर्वापियस्यस्मरणमात्रतः ॥ ४७ ॥ शुद्धिमाप्नोतितस्मैते पुनराचमनंत्विदं ॥ चंद्रचंदनकाश्मीरजलैःस्नानंविधीयते ॥ ४८ ॥ परमानंदबोधाब्धिनिम ग्ननिजमूर्तये ॥ सांगोपांगमिदंस्नानंकल्पयाम्यहमर्हते ॥ ४९ ॥ पीतांबरयुगंदद्याद्यथाश क्तिपरिष्कृतं ॥ मायांवितनुतेजन्मनिजगुह्योरुतेजसे ॥ ५० ॥ निरावरणविज्ञानवासस्तेक

ल्पयाम्यहं ॥ उत्तरीयंततोदद्याद्दासोर्धनियमान्वितं ॥ ५१ ॥ यमाश्रित्यमहामायाजगत्स मोहिनीसदा ॥ तस्मैतेपरमेशायकल्पयाम्युत्तरीयकं ॥ ५२ ॥ यज्ञसूत्रंततोदद्यादथवा स्वर्णनिर्मितं ॥ यस्यशक्तित्रयेणेदंसंप्रोतमखिलंजगत् ॥ ५३ ॥ यज्ञसूत्रायतस्मैतेयज्ञसूत्रं प्रकल्पयेत् ॥ हाराद्याभरणंदद्यात्स्वर्णरत्नसमन्वितं ॥ ५४ ॥ शुभायसुंदरांगायसत्यसत्या श्रयायते ॥ भूषणानिविचित्राणिकल्पयामिसुरार्चित॥५५॥अर्घ्योत्थितंजलंदद्यादुपचारांत रांतरे ॥ समस्तदेवदेवेशसर्वतृप्तिकरंपरं ॥ ५६ ॥ अखंडानंदसंपूर्णगृहाणजलमुत्तमं ॥ चंदनागरुकर्पूरमिश्रोगंधइहोच्यते ॥ ५७ ॥ सर्वांगंलेपयेत्तेनतापत्रयप्रशांतये ॥ परमा नंदसौरभ्यपरिपूर्णदिगंतरं ॥ ५८ ॥ गृहाणपरमंगंधंकृपयापरमेश्वर ॥ पंचपुष्पांजलिंदद्यो त्पूर्वोक्तेनैववर्त्मना ॥ ५९ ॥ अन्यानपिचयोग्यानिपुष्पाणिवैष्णवेमनौ ॥ कमलेकरवीरेतु लस्यौजातिकेतके॥६०॥कल्हारंचंपकंकुंदंमंदारंनागकेसरं ॥ नद्यावर्तमल्लिकांचसयूथींनवम ल्लिकां॥६१॥सौगंधिकोत्पलेकोलकोरंडाशोकमर्जुनं ॥ वसंतींस्वर्णयूथींचसुनिपुष्पंसकेसरं ॥ ॥६२॥पत्रंचामलकंशुद्धंकर्णिकारंनिवेदयेत्॥पलाशादियथालाभंगोविंदायसमर्पयेत् ॥६२॥ मलिनंभूमिसंस्पृष्टंक्रमिकेशादिदूषितं ॥ पर्युषितानिपुष्पाणिवर्जयेद्देवतार्चने ॥ ६३ ॥ तिष्ठेद्दिनत्रयंशुद्धंपद्ममामलकंतथा ॥ तुलसीसर्वदाशुद्धातथाबिल्वदलानिच ॥ ६४ ॥

तिष्ठेद्दिनत्रयंशुद्धंपद्ममामलकंतथा ॥ तुलसीसर्वदाशुद्धातथाबिल्वदलानिच ॥ ६४ ॥

दिनैकंकरवीराणियोग्यानिचतपोधन ॥ तुरीयगुणसंयुक्तंनानारससमन्वितं ॥६५॥ आनं
दसौरभंपुष्पंगृह्यतामिदमुत्तमं ॥ मंत्रसंपुटितांन्यसेन्मातृकांदेववर्त्मनि ॥६६॥ तत्वन्यास
स्थलेनाम्नागंधपुष्पाक्षतैर्यजेत् ॥ पंचात्मिकायांपूजायांगणेशादीन्क्रमाद्यजेत् ॥ ६७ ॥
यदामध्येतुगोविंदंआग्नेय्यांगणनायकम् ॥ नैर्ऋत्यांहंसमभ्यर्च्यऐशान्यांशिवमर्चयेत् ॥६८॥
वायव्यामर्चयेद्देवींभोगमोक्षसुखाप्तये ॥ गंधपुष्पादिभिर्मंत्रीषडंगंपूजयेत्ततः ॥ ६९ ॥ श
क्तौतुपूजयेत्सर्वमन्यथाकेवलंयजेत् ॥ अर्चयित्वागणेशादीन्विंशत्कृत्वोजपेन्मनुं ॥७०॥
विंशत्कृत्वोजपेन्मन्त्रंनमत्कृत्यसमापयेत् तत्तदंगेषडंगानिवक्ष्यमाणेनवायजेत् ॥ ७१ ॥
अग्नीशासुरवायव्यमध्येदिक्षुक्रमाद्यजेत् ॥ आग्नेय्यांशिवकोणेचराक्षसेवायुकोणके ॥७२॥
मध्येदिक्षुचपूर्वादिअंगषट्कंसमर्चयेत् ॥ हारस्फटिककलापाञ्जनमुक्तावन्हिरोचिषोलल
नाः ॥ अभयवरोद्यतहस्ताःप्रधानपुंसोंगदेवताःकथिताः ॥७३॥ मुखस्थंवेणुमभ्यर्च्यवेणवे
नमइत्यथ ॥ हृदयेकौस्तुभंरत्नंसूर्यायुतसमप्रभम्॥७४॥ कौस्तुभायनमःप्रोक्त्वापूजयेत्तंस
माहितः ॥ तदधोवनमालांचचंद्रायुतसमप्रभाम् ॥ ७५॥ प्रणवंवनमालायैनमस्तन्मंत्रई
रितः ॥ श्रीवत्संकौस्तुभाधस्ताच्चतुर्थ्यंतंसमर्चयेत् ॥ ७६ ॥ सहस्रसूर्यसंकाशेकर्णेमकर
कुंडले ॥ मकरकुंडलाभ्यांचनमश्चमंत्रईरितः ॥ ७७॥ किरीटमर्चयेन्मौलौसूर्यकोटिसमप्र

भम् ॥ सूर्यायुतसमाभासकिरीटायनमोवदेत् ॥ ७८ ॥ प्रणवादिरयंप्रोक्तःकिरीटस्यमहर्षिभिः ॥ प्रणवादिनमोंतेनमनुनासर्वमर्चयेत् ॥ ७९ ॥ पूर्वादिदिक्समारभ्यप्रदक्षिणक्रमाद्यजेत् ॥ दामसुदामसुधामाकिंकणींगंधपुष्पकैः ॥ ८० ॥ अंतःकरणरूपास्तेकृष्णस्यपरिकीर्तिताः ॥ आत्माभेदेनतेपूज्यायथाकृष्णस्तथैवते ॥ ८१ ॥ लयांगमुक्तंदेवस्यभोगांगंश्रृणुगौतम ॥ अष्टौमहिष्योदेवस्यपुरआदिप्रपूजयेत् ॥ ८२ ॥ प्रदक्षिणक्रमेणैवरुक्मिण्याद्यास्तुतामताः ॥ रुक्मिणीसत्यभामाचसुशिलाचसुलक्षणा ॥ ८३ ॥ कालिंदीऋक्षजानाग्नजितिश्चैवसुनंदका ॥ रुक्मिण्याद्याश्चाष्टशक्त्योऽह्यष्टौप्रकृतयःस्मृताः ॥ ८४ ॥ शुद्धकांचनदीप्तांगीरुक्मिणीरूढयौवना ॥ सितवस्त्रपरीधानावराभयकरांबुजा ॥ ८५ ॥ इयैंलक्ष्मीपराशक्तिर्विश्वानुग्रहकारिणी ॥ श्रीकृष्णवदनांभोजमीलिताक्षिर्मधुव्रता ॥ ८६ ॥ कलायकुसुमश्यामापीतांबरधराशुभा ॥ वराभयकरोपेताभुक्तयेमुक्तयेनृणाम् ॥ ८७ ॥ सर्वाभरणभूषाढ्यासत्याख्याधारिणीस्मृता ॥ रत्नपूरकरावामेदक्षिणेवरदायिनी ॥ ८८ ॥ अन्याश्चगौरश्यामाभाःक्रमेणपरिकीर्तिताः ॥वराभयकराःसर्वाविचित्राभरणान्विताः॥८९॥ विलसत्पीतवसनाःकृष्णार्पितमनोमुखाः ॥ तद्बहिर्वसुदेवंचयशोदांदेवकींपुनः ॥ ९० ॥ वसुदेवंहेमगौरंश्यामवर्णांचदेवकीं ॥ यशोदांहेमसंकाशांरोहिणींचतथायजेत् ॥ ९१ ॥ वसु

वसुदेवंहेमगौरंश्यामवर्णांचदेवकीं ॥ यशोदांहेमसंकाशांरोहिणींचतथायजेत् ॥ ११ ॥ वसु

देवोहेमगौरोवराभयकरांबुजः ॥ देवकीश्यामसुभगासर्वाभरणशोभना ॥ १२ ॥ सितव
स्त्रयुगाढ्याचसर्वेंसितफलप्रदाः ॥ यशोदाहेमसंकाशासितवस्त्रयुगान्विता ॥ १३ ॥ सर्वा
भरणसन्दीप्ताकुण्डलोद्भासिताननाा ॥ नंदगोपंस्वर्णवर्णवराऽभयकरंयजेत् ॥ १४ ॥ वर
दाभयसंयुक्तंसमस्तपुरुषार्थदम् ॥ तथैवबलदेवंचपूजयेत्कुंदसन्निभं ॥ १५ ॥ हालालोलं
नीलवस्त्रमेककुंडलिनंविभुं ॥ ततोयजेत्सुभद्रांचश्यामलांरूढयौवनाम् ॥ १६ ॥ तद्बहिर्वृ
ष्णयःसर्वेगोपगोपीःसमर्चयेत् ॥ इंद्रनीलमुकुंदाद्यांस्तद्बहिःपरिपूजयेत् ॥ १७ ॥ इंद्रनीलं
मुकुंदंचतथानंदककच्छपौ ॥ पुष्करंशंखपद्मौचनिधयोऽष्टौप्रकीर्तिताः ॥ १८ ॥ तद्बहिःकु
लवृक्षांश्चइंद्रादींस्तद्बहिर्यजेत् ॥ इन्द्रमैरावतारूढंश्यामंवज्रधरंतथा ॥ ९९ ॥ साधिपंस
परीवारंतद्दिशिपरिपूजयेत् ॥ अग्निंहेमसमाभासंशक्तितोमरधारिणं ॥ १०० ॥ मेषारूढंश
क्तियुक्तंतेजसांपतिमर्चयेत् ॥ दक्षिणेपितृदेवंचमाहिषोपरिसंस्थितं ॥ १ ॥ यजेद्दंडधरंचैव
यमंपित्र्याधिदैवतं ॥ राक्षसाधिपतिंतद्वन्नैर्ऋत्यांखड्गधारिणं ॥ २ ॥ तुरगावस्थितंदेवंप
रिवारैःसमर्चयेत् ॥ पाश्चात्येवरुणंशुक्लंमकरारूढमुज्वलं ॥ ३ ॥ अपांपतिंपाशधरंपरिवारैः
सहार्चयेत् ॥ वायव्यांवायुदेवंचप्राणाधिपसमाव्हयं ॥ ४ ॥ दक्षहस्तांकुशमेणवाहनंपरिपूज
येत् ॥ शरदिंदुसमाभासंकुपयाशशलांछनं ॥ ५ ॥ सोमंसोमदिगाधीशंनरारूढंसमर्चयेत् ॥

ईशानंवृषभारूढंचंद्रायुतसमप्रभम् ॥ ६ ॥ रुद्राधिपंशूलहस्तंगंधपुष्पैःप्रपूजयेत् ॥ इन्द्रे
शानमध्यदेशेब्रह्माणंहंसवाहनं ॥ ७ ॥ हेमगौरंचतुर्वक्त्रंपद्महस्तंप्रपूजयेत् ॥ रक्षोवरुणयो
र्मध्येविष्णुंचक्रधरंशुभं ॥ ८ ॥ नागाधिपंसुपर्णंचविष्णुपारषदान्यजेत् ॥ वज्रादीनायुधा
न्भद्रान्तेषांचबहिरर्चयेत् ॥ ९ ॥ यथासिंधुसमद्भूतास्तरंगाभिन्नतांययुः ॥ तथाकृष्णस
मुद्भूताएतेतादात्म्यतांगताः ॥ १० ॥ तद्ध्यानेनचतेध्येयाःसाधकेनशुभंयुना ॥ एवंसप्तावृ
त्तिमयंदेशिकःकृष्णमर्चयेत् ॥ ११ ॥ धर्मार्थकाममोक्षाश्चकरेतस्यसुनिश्चिताः ॥ अथवां
गदिक्पतिभिस्तदस्त्रैरपिचार्चयेत् ॥ १२ ॥ एवंवास्वर्चयन्कृष्णंकाममुक्त्योःसभाजनम् ॥
एतद्यजनाऽशक्तश्चेत्कृष्णाष्टकेनपूजयेत् ॥ १३ ॥ श्रीकृष्णोवासुदेवश्चनारायणसमाह्वयः॥
देवकीनंदनोयदुश्रेष्ठोवार्शोयतत्परम् ॥ १४ ॥ असुराक्रांतभूभारहारीधर्मस्यस्थापकः ॥
एवंवापूजयन्कृष्णंयथावित्तानुसारतः ॥ १५ ॥ इहभुक्त्वावरान्भोगानन्तेचहरितांव्रजेत् ॥
अगरूशीरगुग्गुलुसिताज्यमधुचंदनैः ॥ १६ ॥ सारांगारेविनिक्षिप्तैर्वस्तुभिर्धूपमाचरेत् ॥
वनस्पतिरसोत्पन्नोगंधाढ्योगंधउत्तमः ॥ १७ ॥ आघ्रेयःसर्वदेवानांधूपोऽयंप्रतिगृह्यताम् ॥ १८ ॥
वर्त्याकर्पूरगर्भिण्यासर्पिषातिलजेनवा ॥ संस्थाप्यस्वर्णपात्रादौस्वदीप्तशिखयाततः ॥ १९ ॥
अर्घ्योदकेनसंस्कृत्यनंदजायानिवेदयेत् ॥ उत्तार्यदृष्टिपर्यंतंघंटांवामदिशिस्थितां ॥ २० ॥

अर्घ्योदकेनसंस्कृत्यनंदगोपामिवेदयेत् ॥ [illegible] दिशिस्थितां ॥ २० ॥


वादयन्वामहस्तेन्दक्षहस्तेनचार्पयेत् ॥ स्वप्रकाशोमहादीपःसर्वत्रमितिरापहः ॥ २१ ॥
सबाह्याभ्यंतरंज्योतिर्दीपोऽयंप्रतिगृह्यतां ॥ २२ ॥ स्वर्णेवाताम्रपात्रेवारौप्येवापंकजेदले॥
सितोपदंशशल्यन्नंसगुडंमधुनायुतं ॥ २३ ॥ दधिदुग्धघृतोपेतंकदल्यादिफलान्वितं ॥
आनीयदेवपुरतोह्यर्घ्यतोयंविनिक्षिपेत् ॥ २४ ॥ पवनेनाथसंशोध्यवन्हिनासंदहेत्पुनः ॥
वारुणेनचसंप्लाव्यसुधयापूरितंस्मरेत् ॥२५॥ अस्त्रमंत्रेणसंप्रोक्ष्यधेनुमुद्रांप्रदर्शयेत् ॥ चंद्रबीजं
चांबुसंस्थंचतुर्दशस्वरान्वितं॥२६॥नादबिंदुसमायुक्तंबीजंतदमृतात्मकं॥नमःपरायसंप्रोच्या
ऽनिरुद्धायवदेत्पुनः ॥२७॥ नैवेद्यंचतथेत्युक्त्वाकल्पयामिनमोवदेत् ॥प्रोक्तोनैवेद्यमंत्रोऽयमु
नेनचनिवेदयेत् ॥२८॥ अमृतोपस्तरणमसिस्वाहेतिजलमर्पयेत् ॥ अन्नाहार्यायप्राणायस्वा
हेतिप्रथमाहुतिः॥२९॥अंगुष्ठानामिकामध्याप्राणाख्यामुद्रिकामता ॥ आहवनीयायअपाना
यस्वाहेतिद्दितीयका ॥ ३० ॥ कनिष्ठांगुष्ठानामाभिरपानमुद्रिकामता ॥ गार्हपत्यायव्याना
येस्वाहेतितृतियाहुतिः॥३१॥ तर्जन्यंगुष्ठमध्याभिस्तन्मुद्राःपरिकीर्तिताः॥आवसथ्यायोदा
नायस्वाहेतिचतुर्थाहुतिः ॥३२॥ मध्यमानामिकांगुष्ठाचतुर्थीचकानिष्ठिका ॥ दक्षिणायस
मानायस्वाहेतिपंचमाहुतिः ॥३३॥सर्वाभिरंगुलीभिस्तन्मुद्रिकाःपरिकीर्तिताः॥प्रणवाद्यैरेभि
रेवदेववक्त्रेहुनेतगुरुः ॥३४॥ ओंनिवेदयामिभवतेजुषाणेदंहविर्हरे ॥ नैवेद्यार्पणमंत्रोयंसपर्या

सुप्रकीर्तितः ॥ ३५ ॥ क्षणंविलंब्यमतिमान्दद्याद्गंडूषकंततः ॥ अमृतापिधानमासिस्वाहे त्यमुनांबुना ॥३६॥ विष्वक्सेनायवैदद्याच्छेषनैवेद्यमुत्तमं ॥ उच्छिष्टभोजनाह्येतेतेषांनामा वधारय ॥३७॥ गणेशेवक्रतुंडायसूर्येचंडांशवेऽर्पयेत् ॥ शिवेचंडेश्वरायेतिविष्णौविष्वक्से नायच ॥३८॥शक्त्युच्छिष्टंशोषिकायैदद्यादर्चनसिद्धये ॥ अन्यथानैवसिद्धिःस्यादर्चकोनरकं व्रजेत्॥३९॥नैवेद्यजातमुद्धृत्यस्थानशुद्धिंविधायच ॥ आचमनंजलंदद्याद्दंतधावनमेवच ॥ ॥४०॥ हस्तलेपनतोदद्यात्पुनःपानीयमर्पयेत्॥सूक्ष्मवस्त्रद्वयंदत्वादद्याच्चस्वर्णपादुके ॥४१॥ पूजास्थानंसमानीयरत्नमालांतथार्पयेत् ॥ दिव्यगंधंततोदद्यात्तांबूलंशशिसंयुतं ॥ ४२ ॥ स्तोत्रैःस्तुत्वाचविधिवत्कुर्यात्प्रदक्षिणंहरेः ॥ वेदविदेधरांदत्वायत्फलंलभतेनरः ॥ ४३ ॥ तत्फलंलभतेभक्त्याकृष्णेप्रदक्षिणीकृते ॥ पद्भ्यांकराभ्यांजानुभ्यामुरसाशिरसादृशा ॥४४॥ वचसामनसाचेतिप्रणमोऽष्टांगईरितः ॥ भूमौनिपत्ययःकुर्यात्कृष्णेऽष्टांगनतिंसुधीः॥४५॥ सहस्रवर्षजंपापंत्यक्त्वावैकुंठमाप्नुयात् ॥ ॥ इतिश्रीगौतमीयतन्त्रेनारदप्रोक्तेदश मोऽध्यायः ॥ १० ॥

॥ नारदउवाच ॥ ओंनमःश्रीकृष्णाय ॥ नवीननीरदश्यामंनीलें दीवरलोचनं ॥ बल्लवीनंदनंवंदेकृष्णंगोपालरूपिणं ॥ १ ॥ स्फुरद्बर्हदलोद्बद्धनीलकुंचि तमूर्धजं ॥ कदंबकुसुमोद्भासिवनमालाविभूषितं ॥२॥ गंडमंडलसंसर्गिचलत्कांचनकुंडलं॥

तमूर्धजं ॥ कदंबकुसुमोद्भासिवनमालाविभूषितं ॥२॥ गंडमंडलसंसर्गिचलत्कांचनकुंडलं ॥



स्थूलमूक्ताफलोदारहारद्योतितवक्षसं॥ ३॥हेमांगदतुलाकोटिकिरीटोज्ज्वलविग्रहं ॥मंदमारु
तसंक्षोभवलितांबरसंचयं ॥४॥ रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः ॥ लसद्गोपालिकाचे
तोमोहयंतंमुहुर्मुहुः ॥५॥ बल्लवीवदनांभोजमधुपानमधुव्रतं ॥ क्षोभयंतंमनस्तासांसस्मेरा
पांगवीक्षणैः ॥६॥ यौवनोद्भिन्नदेहाभिःसंसक्ताभिःपरस्परं ॥विचित्रांबरभूषाभिर्गोपनारीभि
रावृतं॥७॥ प्रभिन्नांजनकालिंदीजलकेलिकलोत्सुकं ॥ कालिंदीजलसंसर्गिशीतलानिलकं
पितं ॥८॥ कदंबपादपच्छायेस्थितंवृंदावनेक्वचित् ॥ रत्नभूधरसंलग्नरत्नासनपरिग्रहं ॥ ९॥ क
ल्पपादपमध्यस्थंहेममंडपिकागतं ॥ वसंतकुसुमामोदसुरभीकृतदिङ्मुखं ॥१०॥ गोवर्धन
गिरौरम्येस्थितंरासरसोत्सुकं ॥ सव्यहस्ततलन्यस्तगिरिवर्यातपत्रकं ॥ ११॥ खंडिताखंड
लोन्मुक्तमुक्तासारघनाघनं ॥ वेणुवाद्यमहोल्लासकृतहुंकारनिःस्वनैः ॥ १२ ॥ सवत्सैरुन्मु
खैःशश्वद्गोपालैरभिवीक्षितं ॥ योधयंतंक्वचिद्गोपान्व्याहरंतंगवांगणं ॥ १३ ॥ कृष्णसे
वानुगायद्भिस्तच्चेष्टावशवर्तिभिः ॥ दंडपाणोद्यतकरैर्गोपालैरुपशोभितं ॥ १४ ॥ नारदा
द्यैर्मुनिश्रेष्ठैर्वेदवेदांगपारगैः ॥ प्रीतिसुस्निग्धयावाचास्तूयमानंपरात्परं ॥ १५ ॥ यएवंचिं
तयेद्देवंभक्त्यासंस्तौतिमानवः ॥ त्रिसंध्यंतस्यतुष्टोऽसौददातिवरमीशितं ॥ १६॥ राजवल्ल
भतामेतिभवेत्सर्वजनप्रियः ॥ अचलांभूतिमाप्नोतिसवाग्मीजायतेध्रुवं ॥ १७ ॥ ततोमु

द्रांप्रदर्श्याथअग्निसंस्कारमाचरेत् ॥ मोदनात्सर्वदेवानांद्रावणात्पापसंततेः ॥ १८ ॥ मुद्रास्ताःकथिताः सद्भिर्दैवसान्निध्यदायिकाः ॥ गौतम उवाच ॥ भगवन्मेत्वयामुद्राःसूचितानप्रकाशिताः ॥ कथंविरचनंतासांकृपयाब्रूहिमेगुरो ॥ १९ ॥ नारदउवाच ॥ कनिष्ठांगुष्ठकौसक्तौकरयोरितरेतरम् ॥ तर्जनीमध्यमानामासंहताभुग्नवर्जिताः ॥ २० ॥ मुद्रैषागालिनीप्रोक्ताशस्तागोपालपूजने ॥ वनमालाभिनयवत्कराभ्यामागलादधः ॥ २१ ॥ जानुपर्यंतमित्यैषामुद्रास्याद्वनमालिका ॥ ओष्ठेवामकरांगुष्ठोलग्नस्तस्यकानिष्ठिका ॥२२॥ दक्षिणांगुष्ठसंयुक्तातत्कनिष्ठाप्रसारिता ॥ तर्ज्जनीमध्यमानामाकिंचित्संकुच्यचालिता ॥ २३ ॥ वेणुमुद्रेहकथितासुगुप्ताप्रेयसीहरेः ॥ अंगुलीःसंहताःकृत्वाकरयोर्वामदक्षयोः ॥ ॥ २४ ॥ वामनासासमायुक्तादक्षपाणिकनिष्ठिका ॥ दक्षनासासमायुक्तावामपाणिकनिष्ठया ॥ २५ ॥ दक्षस्यमध्यमाक्रांतावामहस्तस्यतर्जनी ॥ वाममध्यमयाक्रांतादक्षहस्तस्यतर्जनी ॥ २६ ॥ संहतौकारयेद्विद्वान्अंगुष्ठावुभयोरपि ॥ धेनुमुद्रानिगादितागोपितासाधकोत्तमैः ॥ २७ ॥ करौसंपुटितौकृत्वावामपाणिकनिष्ठया ॥ निपीड्यदक्षपाणेस्तुदाक्षिणांगुलिभिर्दृढं ॥ २८ ॥ शिष्टवामांगुलीःकृत्वाउपरिष्टात्समाहितः ॥ आपीड्यमध्यमांगुष्ठंतेनपाणितलेनवै ॥ २९ ॥ तदग्रंपीडयित्वातुदक्षिणांगुलिभिर्दृढं ॥ तथावामांगुलि

ष्ठंतेनपाणितलेनवै ॥ २९ ॥ तदग्रंपीडयित्वातुदक्षिणांगुलिभिर्दृढं ॥ तथावामांगुलि

भवैरतिगाढंनिपीडयेत् ॥३०॥ इतीयंबिल्वमुद्रास्यात्प्रशस्ताकृष्णपूजने ॥ कायेनमनसा वाचाबुद्ध्याऽबुद्ध्याचयत्कृतं ॥३१॥ इहजन्मनिपूर्वस्मिन्नथवापापसंचयं ॥इमांज्ञात्वैवज नस्तन्मुच्यत्याशुनसंशयः ॥३२॥ देवाःसर्वेनमस्यंतिप्रणमंतितथाजनाः ॥ काममुच्चार्य विधिवन्निक्षिपेद्धृदयेऽपिच ॥ ३३ ॥ कृत्वेतरंकरंवामेकृत्वासम्यक्समांगुलीः ॥ अन्योन्य पृष्ठकरयोर्मध्यमानामिकांगुलीः ॥ ३४ ॥ अंगुष्ठेनचवध्नीयात्कनिष्ठामूलसंश्रिते ॥ तर्ज्ज न्यौकारयेदेषामुद्राश्रीवत्ससंज्ञका ॥ ३५ ॥ अनामापृष्ठसंलग्नादक्षिणस्यकनिष्ठिका ॥ क निष्ठिकांतयाबध्वातर्जन्यादक्षयातथा ॥ ३६ ॥ वामानामांचबध्नीयाद्दक्षांगुष्ठस्यमूलके ॥ गृहीत्वादक्षिणांगुष्ठमध्यमानामिकात्रयं ॥ ३७ ॥ मिश्रयित्वातथावामतर्जनीमध्यमेन्यसे त् ॥ दक्षिणेमणिबंधेचवामांगुष्ठंतुयोजयेत् ॥ ३८ ॥ मुद्रेयंकौस्तुभस्योक्तादर्शनीयाप्र यत्नतः ॥ कृत्वेतरकरंवामेकृत्वासम्यक्समांगुलीः ॥ ३९ ॥ वामपृष्ठेपरिन्यसेद्दक्षंकरतलं ततः ॥ अंगुष्ठौचालनीयौचमत्स्यमुद्रेयमीरिता ॥ ४० ॥ करौसंपुटितौकृत्वामणिबंधौतु योजितौ ॥ अंगुष्ठेचकनिष्ठेचप्रविधायस्वयोजिते ॥ ४१॥ शेषाअंगुलयःसर्वाउभयोरपिभं गुराः ॥ परस्परंसमंलग्नाःशून्यंमध्येचकारयेत् ॥ ४२ ॥ उक्ताकलशमुद्रेयंगोपालार्चाविधौ शुभा ॥ कृत्वेतरेकरतलेअंतरांगुलिसंयुते ॥ ४३ ॥ अन्योन्यमभिसंलग्नेअंगुष्ठांतरमाहि

ते ॥ कथिताकूर्ममुद्रेयंसर्वतंत्रेषुगोपिता ॥४४॥ आकुंचितंततःकृत्वावामांगुलिचतुष्टयं ॥ प्रसार्यचतदंगुष्ठंदक्षहस्तेनवेष्टयेत् ॥ ४५ ॥ प्रसार्यतर्जनींदक्षांतदंगुष्ठंचगर्भितं ॥ शंखमुद्रेयमुदितादर्शनात्पापनाशिनी ॥४६॥ इति श्री गौतमीयतन्त्रे एकादशोऽध्यायः ॥११॥

॥ नारद उवाच ॥ अथाग्नियजनंकुर्यात्कृष्णमंत्रानुसारतः ॥ धर्मार्थकाममोक्षाणांयत्कृत्वाफलमश्नुते ॥ १ ॥ गोमयांभःसमालिप्यकुंडंसर्वत्रमंत्रवित् ॥ सामान्यार्घ्यंप्रकल्प्याथपंचगव्येनसेचयेत् ॥ २ ॥ त्रिकोणंचतद्बहिःषट्कोणंपद्मंप्रकल्पयेत् ॥ चतुरस्रंचतुर्द्वारमेवंवावन्हिमंडलं ॥३॥ कुंडस्योत्तरभागेचत्रिरेखंहस्तमात्रकं ॥ दक्षिणोत्तरयोस्तद्वल्लेखात्रयमनुत्तमं ॥ ॥ ४ ॥ पूर्वपश्चिमतःकुर्याद्रेखात्रयमनुत्तमं ॥ अर्घ्याद्भिःप्रोक्ष्यसर्वंहिपंचशुद्धिंसमाचरेत्॥५॥ वीक्षणंमूलमंत्रेणशरेणप्रोक्षणंस्मृतं ॥ ताडनंहेतिमंत्रेणकवचेनाथलेपयेत् ॥ ६ ॥ अस्त्रेणरक्षितंकृत्वावन्हेःसंस्कारमाचरेत् ॥ पाषाणभवमग्निंचअथवाऽरणिसंभवं ॥ ७ ॥ श्रोत्रियाणांगृहोत्थंवावनस्थंवासमाहरेत् ॥ यदृच्छालाभसंप्राप्तोयोग्योयागस्यकर्मणि ॥ ८ ॥ निरग्निब्राह्मणाल्लब्धोह्यर्द्धलाभकरोभवेत् ॥ क्षत्रबंधोश्चतुर्थांशफलंदद्याद्धुताशनः ॥ ९ ॥ वैश्याच्छूद्राच्चविफलंजायतेहोमकर्मणि ॥ तस्मात्सर्वप्रयत्नेनवन्हिमुक्तंसमाहरेत् ॥ १० ॥ आनीयताम्रपात्रस्थंक्रव्यादांशंपरित्यजेत् ॥ क्रव्यादेभ्योनमःकृत्वाप्रणवाद्योमनुर्भवेत्॥११॥

आनीयताम्रपात्रस्थंक्रव्यादांशंपरित्यजेत् ॥ ... वाद्योमनुभवेत्॥ ११॥

पूर्वाग्राणांस्मृतादेवासुकंदेशपुरंदराः ॥ रेखाणामुदगग्राणांब्रह्मवैवस्वतेंदवः ॥ १२॥ ततीव न्हेर्योगपीठमर्चयेत्कर्णिकोपरि ॥ धर्मज्ञानंचवैराग्यमैश्वर्यमादितोयजेत् ॥ १३ ॥ पूर्वादि दिक्षुनमःपूर्वानधर्मादिकान्यजेत् ॥ मध्येचपूजयेद्वन्हेर्नवशक्तिविधानवित् ॥ १४ ॥ पीता श्वेतारुणाकृष्णाधूम्रातीव्रास्फुलिंगिनी ॥ रुचिराज्वालिनीप्रोक्ताकृशानोर्नवशक्तयः ॥१५॥ मँवन्हिमंडलंपूज्यअँअर्कमंडलंयजेत् ॥ ऊँसोममंडलंतद्वदर्चयेद्गंधपुष्पकैः ॥ १६ ॥ वा गीश्वर्यमृताख्यातांनीलेंदीवरसान्निभां ॥ वागीश्वरेणसहितामुपचारैःसमर्चयेत् ॥ १७ ॥ शक्तिप्रणवबीजाभ्यांतयोरर्चनमीरितं ॥ वागीश्वरींमृतुमतींपुरुषाधिष्ठितांस्मरेत् ॥ १८ ॥ वन्हिसंकृत्यपात्रस्थरँबीजेनतुमंत्रयेत् ॥ चैतन्यंप्रणवेनैवयोजयंस्तंप्रयोजयेत् ॥ १९ ॥ आत्मनोऽभिमुखंवन्हिंजानुस्पृष्टमहीतलः ॥शिवबीजधियादेव्यायोनावेनांविनिःक्षिपेत्॥२०॥ ततोदेवायदेव्यैचदद्यादाचमनीयकं ॥ गर्भनाड्याधृतंध्यायेद्वन्हिरूपंहरिंगुरुः ॥ २१ ॥ प श्वाद्गर्भस्यरक्षार्थंप्रदद्याद्दर्भकंकणं ॥ भूषाभिर्भूषयेद्देवींत्रैलोक्योत्पत्तिमातृकां ॥ २२ ॥ रेफवायुषट्स्वरैश्वनादबिंदुविभूषितः ॥ सादियांताश्वजिन्हानांमनवःपरिकीर्तिताः॥ २३॥ पायौलिंगेतथानाभौह्वदयेकंठमूलतः ॥ लंबिकायांभ्रुवोर्मध्येजिन्हाज्वालांचविन्यसेत् ॥ ॥ २४ ॥ हिरण्यगगनारक्ताकृष्णान्यासुप्रभामताः ॥ बहुरूपातिरिक्ताचजिन्हास्युःकृष्ण

वर्त्मनः ॥ २५ ॥ सहस्त्रार्चिस्स्वास्तिपूर्णउत्तिष्ठपुरुषस्तथा ॥ धूम्रव्यापिसप्तजिव्होधनुर्धरइ तीरितः ॥ २६ ॥ षडंगमंत्रावन्हेश्चप्रणवाद्यानमोन्तकाः ॥ हृदयादिक्रमेणैवन्यस्तव्याअं गदेवताः ॥ २७ ॥ मूर्ध्निस्कंधेतथापार्श्वेकट्यंधुकटिपार्श्वके ॥ स्कंधेमूर्ध्निचविन्यसेत्प्रदाक्षि णक्रमेणतु ॥ २८ ॥ जातवेदाःसप्तजिव्होहव्यवाहनसंज्ञकः ॥ अश्वोदरजसंज्ञोऽन्यःपुनर्वै श्वानराव्हयः ॥ २९ ॥ कौमारतेजाविश्वमुख्योऽप्येतद्देवमुखस्तथा ॥ एवंविन्यस्तदेहःसन् ज्वालयेन्मनुनाऽमुना ॥ ३० ॥ प्रणवंपूर्वमुद्धृत्याचित्पिंगलपदंततः ॥ हनद्वयंसमुच्चार्यदह द्वयंतथापठेत् ॥ ३१ ॥ सर्वज्ञाज्ञापयस्वाहामंत्रोऽयंवन्हिज्वालने ॥ अग्निंप्रज्वलितंवंदेजा तवेदंहुताशनं ॥ ३२ ॥ सुवर्णवर्णममलंसमिद्धंसर्वतोमुखं ॥ संसिद्धेनचमंत्रेणात्रिभिर्मंत्रै र्हुताशनं॥३३॥ज्वालयेन्मतिमान्मंत्रीअन्यथाविफलंभवेत् ॥ दर्भैरगर्भ्यैःशुद्धैश्चमूलमध्याग्र साधितैः ॥ ३४ ॥ संस्तरेद्दिधिवन्मंत्रीप्रदक्षिणवशादथ ॥ एवंसंस्तरणंकुर्याद्दर्जयित्वात्म नोदेशं ॥ ३५ ॥ यज्ञवृक्षोद्भवैस्तद्दत्काष्ठैश्चपरिधित्रयं ॥ मध्यस्थमेखलायांतुसंस्तरेन्मंत्र वित्तमः ॥ ३६ ॥ अथचेत्स्थंडिलेमंत्रीभूमौसर्वंपरिस्तरेत् ॥ गंधादिभिःसमभ्यर्च्यवन्हिदे वंविभावयेत् ॥ ३७ ॥ त्रिनयनमरुणाभंबद्धमौलिंजटाभिः । शुभमरुणमनेकाकल्पमंभो जसंस्थं॥अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं । नमतकमलमालालंकृतांसंकृशानुं ॥३८॥

जसंस्थं॥अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं । नमितकमलमालालंकृतांसंकृशानुं ॥ ३८॥

सुवर्णवर्णममलंलसत्स्वर्णोपवीतकं॥ चतुर्भुजंद्विशिरसंहव्यकव्याविनायकं॥३९॥कमंडलूता लवृंतंशक्तिस्वस्तिकधारिणं ॥ चतुर्भुजंस्वर्णमालालंकृतांसंसमुज्वलं ॥ ४० ॥ शब्दब्रह्मम यंस्तोत्रंशब्दायमानमुत्तमं ॥ एवंवामनसाध्यायेच्छांतिकादौगुरूत्तमः ॥ ४१ ॥ कृष्णंकृ ष्णगतेर्वर्णंध्यायेन्मारणकर्मणि ॥ मूर्तीरष्टौसमभ्यर्च्यषट्कोणेतुषडंगकम् ॥ ४२ ॥ मध्ये जिव्हांयजेद्वन्हेर्वन्हितन्मनुनायजेत् ॥ वैश्वानरपदंपूर्वंजातवेदमनंतरं ॥ ४३ ॥ लोहिता क्षंततश्चोक्त्वाइहावहनतःपरं ॥ सर्वकर्माणिसाधयस्वाहामनुःसमृद्धिदः ॥४४॥ आज्यस्था लींसमानीयक्षालयेदस्त्रमंत्रतः ॥ कुंडेंगारान्समुत्तोल्यन्यसेत्तत्रास्त्रमंत्रतः ॥ ४५ ॥ तस्मा माज्यंविनिक्षिप्यजानीयातपनांहितम् ॥ प्रज्वाल्यकुशमूलंतुआज्येक्षित्वानलंक्षिपेत्॥४६ ॥ अभिद्योतनमित्युक्तंसर्वदासर्वकर्मसु ॥ पुनःकुशान्समुज्वाल्यनिःक्षिपेदाज्यमध्यतः॥४७॥ मूलमंत्रेणमतिमानाज्यसंस्कारईरितः ॥ अभिमंत्र्यचमूलेनरक्षयेदस्त्रमुच्चरन् ॥ ४८ ॥ प्र दर्शयधेनुयोनिंचआज्यंतदमृतात्मकं ॥ स्रुक्स्रुवौचसमादायविधिनानिर्मितौगुरुः ॥ ४९ ॥ त्रिशःप्रतापयेद्वन्हौपुनःप्रक्षाल्यवारिणा ॥ पुनःप्रताप्यतौमंत्रीस्थापयेत्तौस्वदक्षिणे॥५० ॥ कुशास्तरेचविधिनाकुशैराच्छादयेत्ततः॥स्रुवमादायमतिमान्धारयंस्तुत्रिभागतः॥५१॥दक्षा दाज्यंसमादायअग्नयेतदनंतरं॥स्वाहेतिजुहुयान्मंत्रीअग्नेर्दक्षिणलोचने ॥५२॥ वामतस्तद्वदा

दायसोमायस्वाहयाततः ॥ मंत्रेणानेनजुहुयादग्नेर्वामविलोचने ॥५३॥ मध्यात्तद्वत्समादायअ
ग्नेर्भालस्थलोचने ॥ जुहुयादग्नीषोमाभ्यांस्वाहेतिमनुनाऽमुना॥५४॥ नमइत्याज्यमादायदक्षि
णांसादथाग्नये ॥ स्विष्टकृतेचस्वाहेतिवन्हेःप्रजुहुयान्मुखे ॥५५॥ इत्यग्नेर्नेत्रवक्त्राणांकुर्यादु
द्घाटनंगुरुः॥पुनर्व्याहृतिभिर्हुत्वाजिव्हांगंमूर्तितोहुनेत्॥५६॥ वैश्वानरेणमंत्रेणत्रिवारंजुहुयो
द्गुरुः॥संस्कारार्थंततोवन्हेर्हुनेन्नवनवाहुतीः ॥५७॥ प्रणवाद्येनमतिमान्स्वाहांतेनतदुच्चरन् ॥
गर्भाधानंपुंसवनंसीमंतोन्नयनंतथा ॥ ५८ ॥ जातकर्मतथानामउपनिष्क्रमणंतथा ॥ चूडो
पनयनेभूयोवेदाध्ययनमेवच ॥ ५९ ॥ गोदानंचविवाहंचसंस्कारान्शुभकर्मणि ॥ अशुभे
मरणांतास्तेप्रयुक्तास्तंत्रवेदिभिः ॥ ६० ॥ ततश्चपितरौवन्हेःसंपूज्यहृदयंनयेत् ॥ वन्हि
मंत्रेणाविधिवद्द्यादाहुतिपंचकं ॥ ६१ ॥ समिधःपंचजुहुयान्मूलाग्रघृतसंयुताः ॥ गुरुर्हृदय
मंत्रेणविधिवत्स्वाहयाविना ॥ ६२ ॥ महागणेशमंत्रेणहुनेदेकादशाहुतीः ॥ सामान्यंसर्व
देवानामेतदग्निमुखंस्मृतं ॥ ६३ ॥ बहुरूपायांचजिव्हायामावाह्यपरमेश्वरं ॥ गंधादिभिः
समभ्यर्च्यजुहुयात्षोडशाहुतीः ॥ ६४ ॥ मूलमन्त्रेणविधिनावक्त्रैकीकरणंत्विदं ॥ पुन
स्तेनैवजुहुयादाहुतीःपंचविंशतिः ॥ ६५ ॥ नाडिसंधानमुद्दिष्टंवन्हिदेवतयोरपि ॥ अंगा
दिपरिवाराणामेकैकामाहुतिंहुनेत् ॥ ६६ ॥ पुनर्व्याहृतिभिर्हुत्वाहोमंकुर्याद्यथाविधि ॥

तिलाज्येनैवजुहुयात्सहस्रादियथाविधि ॥ ६७ ॥ अनुक्तेचहविर्द्रव्येतिलाज्यंहविरुच्यते ॥
जुहुयाद्रक्तपद्मंवामधुरत्रयसंयुतम् ॥६८॥ पायसंमधुरोपेतंजुहुयाद्वैयथामति ॥ ६८ ॥ आ
स्यांतर्जुहुयाद्वन्हेः पंडितःसर्वकर्मसु ॥ बधिरत्वंकर्णहोमेनेत्रेत्वंधत्वमाप्नुयात् ॥ ६९ ॥
नासिकायांमनःपीडांशिरेहोमोहिमृत्युदः ॥ यतःकाष्ठंततःश्रोत्रंयतोधूमोऽथनासिका॥७०॥
यतोऽल्पज्वलनंनेत्रंयतोभस्मततःशिरः ॥ यतःप्रज्वालितोवन्हिस्तन्मुखंजातवेदसः ॥७१ ॥
एवंहोमंसमाप्याथमतिमान्श्रपयेच्चरुम् ॥ पात्रेताम्रमयेशुद्धेदुग्धेनकापिलेनवै ॥ ७२ ॥ शु
द्धतंडुलसंभूतप्रसृतीर्विंशतिक्षिपेत् ॥ घृतधारांततोदद्याद्यावत्स्विन्नोभवेच्चरुः ॥ ७३ ॥ अ
वतार्यततोविद्वान्भागत्रयंयथाचरेत् ॥ भागमेकंसमादायनित्यहोमंसमाचरेत् ॥ ७४ ॥
कुंडेवास्थंडिलेमंत्रीस्थलेवाशोधितेतथा ॥ एकहस्तमितेदेशेकुशपुष्पांबुसेचिते ॥ ७५ ॥
वन्हितत्रसमादायजातवेदोमनोर्जपात् ॥ व्याहृतिभिस्तथाहुत्वाकृष्णमावाह्यभक्तितः ॥
॥७६॥ गंधादिभिःसमभ्यर्च्यमूलेनपंचविंशतिः ॥ आहुतीर्जुहुयान्मंत्रीषडंगंहोममाचरेत्॥
॥७७॥लयांतंचततोहुत्वानमस्कृत्यचमंत्रवित् ॥ विसृजेद्वह्निंदुर्गेधाम्निनित्यहोमोऽयमीरितः॥
॥७८॥ स्वगृह्योक्तविधानेनबलिंवैश्वमथाचरेत् ॥ भागद्वयमथचरुंकृष्णायविनिवेदयेत् ॥
॥७९॥ एकभागंस्वयंभुक्त्वाशिष्टंशिष्येसमर्पयेत् ॥ शयीतकुशशय्यायांकंबलेवाकुशासने॥

॥८०॥ भूतेश्वरस्यमंत्रेणआशिषंवर्द्धयेद्गुरुः ॥ ततःशयीनतांरांत्रियतवाक्शुद्धमानसः ॥ ॥८१॥ चिंतयन्कृष्णचरणमधिवासोऽयमीरितः ॥८२॥ इतिश्रीगौतमीयतन्त्रे नारदप्रोक्ते द्वादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

ततःप्रातःसमुत्थायकृतनित्यक्रियोगुरुः ॥ कृतनित्योऽपिशिष्यस्तुनिषीदेद्गुरुसन्निधौ॥१॥ कथयेद्रात्रिवृत्तांतंशुभंवायदिवाशुभम् ॥ सुमंगलाभिर्नारीभिःसहसंभोजनंमिथः ॥२॥ गिरिशृंगारोहणंचहस्त्यश्वरथरोहणं ॥ आरोहणंसौधगृहेदेवोत्सवनिरीक्षणं ॥ ३ ॥ मंगलंच सुरामांसदर्शनंस्पर्शनंतथा ॥ मंत्रसिद्धेस्तुलिंगानिप्रोक्तानितवसुव्रत ॥ ४ ॥ अनुकूलानि कथयन्शृणुनिंद्यानिसर्वतः ॥ कृष्णवर्णैर्भटैःस्वप्नेप्रहारस्तैललेपनम् ॥५ ॥ विप्राणांरोषवाद श्वपरस्त्रीणांनिषेवणम् ॥ सिद्धिविघ्नानिचोक्तानिअन्यानिनिंदितानिच ॥ ६ ॥ एवंदोषंसमा ज्ञायक्षणात्परिहरेद्गुरुः ॥ होमंकुर्यात्सहस्राणिद्रव्यैःकल्पोक्तदर्शितैः ॥ ७ ॥ सांगसपरि वारंचहुत्वाबलिमथाचरेत् ॥ मंडलस्यबहिर्भागेलोकेशादिबलिंहरेत् ॥ ८ ॥ नक्षत्राणांस वाराणांसराशीनांयथाक्रमम् ॥ गंधाद्यैःसम्यगभ्यर्च्यतत्तन्मंत्रैस्तुमंत्रवित् ॥ ९ ॥शुद्धान्नेनस तोयेनतत्रस्थानेष्वनुक्रमात् ॥ दद्याद्बलिंगंधपुष्पैर्धूपदीपकमादरात् ॥ ताराणामश्विन्यादी नांराशिःपादाधिकद्वयम् ॥१०॥मेषादिमुक्त्वानक्षत्रसंज्ञांपूर्वमनंतरम्॥देवताभ्यःपदंप्रोक्त्वा

नाराशिःपादाधिकद्वयम्  ॥देवताभ्यःपदंप्रोक्त्वा

दिवानक्तंवदेत्तथा॥ ११॥चरेभ्यश्चाथसर्वेभ्योभूतेभ्यश्चनमोवदेत् ॥ एवंराशौतुसंपूर्णेतस्मिँस्तत्प्रयोजयेत् ॥ १२ ॥ अथराश्यधिपानांचग्रहाणांतत्रतत्रतु ॥ मीनमेषांतरालेषुकारणानां बलिंहरेत् ॥ १३ ॥ मेषस्यवृश्चिकस्यारःशुक्रोवृषतुलाधिपः ॥ बुधोवैकन्यकानाथश्चंद्रःकर्कटकाधिपः ॥ १४ ॥ सिंहराश्यधिपोभानुश्चापमीनाधिपोगुरुः ॥ मकरस्यापिकुंभस्यमंदोराश्यधिपाइमे ॥ १५ ॥ लमिंद्रायचइत्यादिविष्णुपारिषदांस्तथा ॥ दद्याद्बलिंदिगीशेभ्योविधिनाथगुरूत्तमः ॥ १६ ॥ हरदुर्गागुहविष्णुब्रह्मलक्ष्मीधनाधिपाः ॥ वारदेवाइतिप्रोक्तास्तेभ्योबलिंहरेद्गुरुः ॥ १७ ॥ इत्थंबलिविधिःप्रोक्तःसर्वविघ्नौघनाशकः॥ गोपुच्छमूलिकांत्यक्त्वातृणैरास्तरणंभवेत् ॥ १८ ॥ जंवीरंकलिवृक्षंचत्यक्त्वाचैधांसिकल्पयेत् ॥ शुद्धसिंदुरबालार्कवर्णोवन्हेःसुशोभनः ॥ १९ ॥ भेरीवादित्रगंभीरशब्दोवन्हेःशुभप्रदः ॥ चंद्रचंदनकुंदाभोधुमःसर्वार्थसिद्धिकृत् ॥ २० ॥ खरवायसवच्छब्दोवन्हेःसर्वविनाशकृत् ॥ कृष्णःकृष्णगतेर्वर्णोराज्यंचापिविनाशयेत् ॥ २१ ॥ पूर्णाहुतिंततोदद्याद्वन्हेश्चैवविधानवित् ॥ ॐभूरग्नयेपृथिव्यैचमहतेस्वाहयायुतः ॥ २२ ॥ भुवोवायवेंतरिक्षायदिवेचमहतेस्वाहा ॥ स्वश्चंद्रमसेतिदिग्भ्योनक्षत्रेभ्यश्चस्वाहा ॥ २३ ॥ ॐभूर्भुवस्वश्चंद्रमसेनक्षत्रेभ्यश्चस्वाहया ॥ स्रुक्स्रुवौचसमादायघृतेनापूर्यतौपुनः ॥ २४ ॥ होमद्रव्याणिनिक्षिप्यनाभौसंस्थाप्यतौ

पुनः ॥ ब्रह्मार्पणेनमनुनादद्यात्पूर्णाहुतिंपुनः ॥ २५ ॥ इतःपूर्वंप्राणमनोबुद्धिदेहधर्माधिकारतोजाग्रत्स्वप्नसुषुप्त्यवस्थासुत्रमनसावाचाकर्मणाहस्ताभ्यांपद्भ्यामुदरेणशीश्नायत्स्मृतंयत्कृतंयदुक्तंतत्सर्वंब्रह्मार्पणंभवतु स्वाहा ॥ २७ ॥ ब्रह्मार्पणमनुःसोऽयंब्रह्मार्पणविधौस्मृतः ॥ २८ ॥ इतिश्रीगौतमीयतन्त्रे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ छ ॥

एवंहोमविधिंकृत्वाकुंडस्थंडिलदेवताः॥ दिक्पालदेवताश्चापिअंकुरार्पणदेवताम् ॥१ ॥आनयेत्कलशेचापिकृष्णैक्यंभावयेद्गुरुः॥ कृष्णंसुधात्मतांनीत्वाशिष्यमाहूयमंत्रवित् ॥२॥ वाससानेत्रंबध्नीयान्नेत्रमंत्रेणयत्नतः ॥ पाययित्वापंचगव्यंमंत्रामृतमयंशुभम् ॥३ ॥ स्पृष्ट्वाततंत्रमंत्रज्ञोह्यध्वषट्केचशोधयेत् ॥ विष्णुतत्वानिसंशोध्यअभिषेकगृहंनयेत् ॥ ४ ॥ वर्णःकलौपदंतत्वंमंत्रोभुवनमेवच ॥ अध्वषट्कमितिप्रोक्तंमुनिभिस्तंत्रवेदिभिः ॥ ५ ॥ वर्णाध्वावर्णसंघश्चकलाध्वाषड्भिरीरितः ॥ पदाध्वापदसंघातस्तत्वाध्वापंचविंशतिः ॥ षट्त्रिंशद्वैष्णवंतत्वमितितत्वविदोविदुः ॥ ६॥ मंत्राध्वामंत्रराशिःस्यात्तेहिवैदिकतांत्रिकाः ॥ भुवनाध्वेतिकथितोभुवनानिचतुर्दश ॥ ७ ॥ शोधयाम्यमुमध्वानममुकस्येतिपूर्ववत् ॥ वेदगर्भोनमश्चान्तेमनुरध्वविशोधने ॥ ८ ॥ नवाहुतीर्गुरुःकुर्यादेकैकाध्वंविशोधयेत् ॥ हस्तेगृहीत्वातंशिष्यमभिषेकगृहंनयेत् ॥ ९ ॥ निवेश्यमातृकायंत्रेसेचयेत्कलशामृतैः ॥ कृष्णानु

हीत्वातंशिष्यमभिषेकमुद्ययेत् ॥ ९ ॥ निषिच्यनामृतैर्मन्त्रैः कलशामृतैः ॥ कृष्णानु



भवपूर्णात्मा आचार्यश्चालयेद्घटम् ॥ १० ॥ गोरोचनापल्लवानिकल्पवृक्षधियास्पृशन् ॥ शिशोःशिरसिसंयोज्यविलोमांमातृकांजपन् ॥ ११ ॥ मूलमंत्रंतथाजप्त्वाकुर्यादेवाभिषेचनम् ॥ कृष्णात्मकंतुतत्तोयंशिरआदिपदावधि ॥ १२ ॥ अभिषिंचेत्तेनमंत्रीकृष्णात्माभवतिध्रुवम् ॥ रत्नौषधिकलाभिश्चजलंकृष्णात्मकंभवेत् ॥ १३ ॥ तेनतत्सेकमात्रेणाशिष्यःकृष्णोनचान्यथा ॥ एवंयःकुरुतेभक्तआत्मानंविष्णुसात्कृतम् ॥ १४ ॥ इहभुक्त्वायथाकामंदेहांतेसत्पदंव्रजेत् ॥ चंदनालेपितांगश्चद्विजाशीर्भिश्चसंयुतः ॥ १५ ॥ कृष्णात्मानंदेशिकंतंप्रणम्यचपुनःपुनः ॥ निषीदेत्सन्निधौतस्यनियतोविनयान्वितः ॥ १६ ॥ न्यासजालंतस्यदेहेगुरुःसंन्यस्ययत्नतः ॥ दक्षकर्णेवदेन्मंत्रंत्रिवारंपूर्णमानसः ॥ १७ ॥ गणेशादिमनुंचोक्त्वासमयान्कथयेद्गुरुः ॥ मंत्रार्थंमंत्रबीजंचतच्छक्तितत्फलानिच ॥ १८ ॥ आत्मानंदर्शयेत्साक्षात्स्वनाम्नातन्मयत्वतः ॥ मंत्रकुंडलिदेवानामेकार्थत्वंप्रकाशयेत् ॥ १९ ॥ सिद्धांतंवैष्णवंयत्नाद्बोधयेत्कृपयागुरुः ॥ एवंचोपदिशाच्छिष्यंयथातन्मयतांव्रजेत् ॥ २० ॥ यथाग्रामगतंतोयंविष्ठामूत्रादिदूषितम् ॥ गंगायांमिलितंतत्तुगंगैवभवतिध्रुवम् ॥ २१ ॥ गुरुसंगात्तथाशिष्योज्ञानरूपोभवेद्ध्रुवम् ॥ तथामातृमानमेयत्रयातीतोभवेद्विभुः ॥ २२ ॥ शिष्योऽपिपूर्णतांमत्वागुरुंयत्नेनतोषयेत् ॥ गुरवेदक्षिणांदद्याद्वित्तार्धभक्तितत्परः ॥ २३ ॥ तदर्धंवात

तोदद्याद्यथाशक्त्याथभक्तितः ॥ वित्तशाठ्यंनकुर्वीतकृतेऽनर्थंसमावहेत् ॥ २४ ॥ गोभूहिरण्यवस्त्रादिगुरवेऽथनिवेदयेत् ॥ गुरुपुत्रेचतत्पत्न्यातच्छिष्येऽपिस्वशक्तितः ॥ २५॥वस्त्रालंकरणंदद्याद्भोज्यमिष्टंयथारुचि॥ऋत्विग्भ्योदक्षिणांदद्याद्वस्त्रालंकारसंयुताम्॥२६ ॥सात्वतांस्तर्पयेद्भक्त्यायथाविभवाविस्तरात् ॥ ततःप्रभृतिमंत्रज्ञोगुरुशासनसांस्थितः॥२७॥ यथामंत्रेतथादेवेयथादेवेतथागुरौ ॥ पश्येदभेदतांमंत्रीएवंभाक्तिक्रमोमुने॥२८॥अभक्तिभजनाल्लोकेदेवताक्लेशदायकः ॥ गुरुरीश्वरएवेतिसद्भक्तिक्रमएवाहि॥२९॥त्रिदिनंनिवसेद्भक्त्यासिद्धयेगुरुसान्निधौ॥अन्यथातद्व्रतंतेजोगुरुर्मातिनसंशयः॥३०॥इतिश्रीगौतमीयतंत्रे चतुर्दशोऽध्यायः॥१४॥

चैत्रेमास्यथवाकृत्वाशुभर्क्षेगुरुशासनात् ॥ द्वादश्यांशुक्लपक्षेचमाधवेमासितत्तिथौ ॥ १ ॥ आरभेदमलायांवैपुरश्चर्यासुसिद्धये ॥ जपहोमौतर्पणंचसेकोब्राह्मणभोजनम् ॥ २ ॥ पंचांगोपासनंलोकेपुरश्चरणमुच्यते ॥ आदौपुरस्क्रियांकर्तुंकुर्याद्भूमेःपरग्रहम्॥ ३ ॥ स्वेच्छाचारविहारायततऊर्ध्वंनलंघयेत् ॥ जीवहीनोयथादेहःसर्वकर्मसुनक्षमः ॥ ४ ॥ पुरश्चरणहीनोऽपितथामन्त्रःप्रकीर्तितः ॥ पर्वताग्रेनदीतीरेगोष्ठेदेवालयेतथा ॥ ५ ॥पुण्यारण्येतथातीरेसमुद्रस्यनिजेगृहे ॥ तुलसीकाननेरम्येबिल्वमूलेचशस्यते ॥ ६ ॥ विष्णुक्षेत्रेचविधिवत् सिद्धयेजपमाचरेत् ॥ पुरश्चरणकृन्मंत्रीभक्ष्याभक्ष्यंविचारयेत् ॥ ७ ॥ अन्यथाऽभक्ष्यदोषेण

सिद्धयेजपमाचरेत् ॥ पुरश्चरणकृन्मंत्रीमिदयामिदर्यांविचारयेत् ॥ ७ ॥ अन्यथाऽभक्ष्यदोषेण


सिद्धिहानिःप्रजायते ॥ सत्कुलस्थानजातानांशुचीनांश्रीमतांसताम् ॥८॥ गृहस्थानांवदा
न्यानांभिक्षाशीलाग्रजन्मनाम् ॥ भुंजानश्चहविष्यान्नंशाकंचविहितंतथा ॥ ९॥ मूलकैसुक
कैन्दूनांवर्जनंविहितंमुने ॥ पयोदधिफलंवारिनारिकेलंयथोदितम् ॥ १०॥ हविष्यंवातथा
श्नीयात्सक्तुंयवसमुद्भवम् ॥ आम्रमामलकंचैवमूलंकेसरिसंभवम् ॥ ११॥रंभाफलंतिंतिडी
कंकमलंनागरंगकम् ॥ फलान्येतानिभोज्यानिएषामन्यानिवर्जयेत् ॥१२॥ ऐक्षवंवर्जयेन्मं
त्रीशर्करेक्षुविवर्जितम् ॥ लवणंक्षारमल्पंचगृंजनंकांस्यभोजनम् ॥१३ ॥ तावूलंचाह्निभुक्त
चदुःसंभाष्यंप्रमत्तताम् ॥ श्रुतिस्मृतिविरोधंचजपंरात्रौचवर्जयेत् ॥१४॥ भूशय्यांब्रह्मचारि
त्वंमौनंचाप्यनसूयताम् ॥ नित्यंत्रिषवणंस्नानंक्षुद्रकर्मविवर्जनम् ॥१५॥ नित्यपूजानित्यदा
नंदेवतास्तुतिकीर्तनम् ॥ नैमित्तिकार्चनंचैवविश्वासोगुरुदेवयोः ॥ १६ ॥ जपनिष्ठाह्याद
शैतेधर्मास्युर्मंत्रसिद्धिदाः ॥ नित्यंसूर्यमुपस्थायतस्यचाभिमुखोयजेत् ॥ १७॥ देवताप्रति
मादौचवन्हौचाभ्यर्च्यतन्मुखः ॥ अनिर्वेदस्तथाव्यग्रःशास्त्रोक्ताचारपालकः ॥१ ८ ॥ स्ना
नपूजाजपध्यानहोमतर्पणतत्परः ॥ निष्कामोदेवतायांचसर्वकर्मानिवेदकः ॥ १९ ॥ ए
वमादींश्चनियमान्पुरश्चरणकृच्चरेत् ॥ शक्तोत्रिषवणंस्नानमन्यथाह्निःसकृच्चवा ॥ २० ॥अ
स्नातस्यफलंनास्तिनचातर्पयतःपितॄन् ॥ अमेध्यसंभवंदेहंजलादिंद्रियशुद्धता ॥ २१ ॥

तस्मान्मुख्यंजलस्नानंसर्वेषांमुनिभिःस्मृतम् ॥नवीक्षेत्पतितंव्रात्यंपिशुनंवेदनिंदकम्॥२२॥
तथानाश्रामिणंविप्रांविश्वस्यचविनिंदकम्॥ऋतुकालंविनामंत्रीस्वांस्त्रियंचापिनस्पृशेत्॥२३॥
मैथुनंतत्कथालापंतद्गोष्ठीःपरिवर्जयेत् ॥ पर्वतेसिंधुतीरेवापुण्यारण्येनदीतटे ॥ २४ ॥ यदि
कुर्यात्पुरश्चर्यांतत्रकूर्मनचिंतयेत् ॥ ग्रामेवायदिवाराष्ट्रेगृहेवातंचचिंतयत् ॥ २५॥ दीपस्था
नंत्रिधाप्रोक्तंमुखंपृष्ठेचमध्यतः ॥ दीपस्थानेभवेत्सिद्धिर्नान्यथाकोटिजन्माभिः ॥ २६ ॥
पूर्वोत्तरविभागेनचतुःसूत्राणिपातयेत् ॥ नवकोष्ठंभवेदेतत्कूर्मदेहमनुत्तमं ॥२७॥ पूर्वादि
दिशिमंत्रज्ञःप्रदक्षिणक्रमेणतु ॥ कादिवर्गांल्लिखेद्विद्वान्पंचपंचविभागशः॥२८॥ पादिवर्गं
शादिवर्गंलक्षमीशेचसँल्लिखेत् ॥ कूर्मस्यांगंचकूर्मवत्कुर्याच्छोभंयथाभवेत् ॥ २९ ॥ स्वरा
णांयोगयुग्मंचमध्येचाष्टसुदिक्षुच ॥ एवमष्टांगवान्कूर्मःसर्वेषांसिद्धिदीपकः ॥३०॥ दीप
नाथंलिखेन्मध्येपूजयेत्तंविभावयन् ॥ यस्यादिशिग्रामनामाद्यक्षरंदृश्यतेतथा ॥३१॥ कूर्म
वक्त्रंचजानीयात्तत्रसिद्धिरनुत्तमा॥वक्त्रात्पार्श्वेचकोष्ठेद्वेकरौकूर्मस्यविद्धिहि॥३२॥मध्येकु
क्षीउभौज्ञेयौपादौद्वौशेषपुच्छकम् ॥ एवंकूर्मंविजानीयाद्दीपचक्रविवेचकः ॥ ३३ ॥ मुखे
सिद्धिर्भवेन्नूनंमध्येसिद्धिश्चजायते ॥ उदासीनःकरस्थश्चेत्पार्श्वस्थोदुःखमाप्नुयात् ॥ ६४ ॥
पादस्थःपीड्यतेमंत्रीबंधनोच्चाटनादिभिः ॥ पुच्छेमृत्युर्भवेन्नूनमेवंकूर्मस्यसंस्थितिः॥३५॥

मंत्राक्षरेणमैत्रंचेत्कूर्मनाम्नोभवेद्यदि ॥ साधकस्यचनाम्नाचकिलसिद्ध्यतिमंत्रिणः ॥३६॥
पंचाशद्वर्णरूपेणक्षेत्रेशाविश्वविग्रहाः ॥ तस्मात्समगुणंक्षेत्रंसिद्ध्येस्यान्नचान्यथा ॥ ३७ ॥
विगुणंचेन्मुखस्थोऽपिकष्टेनासिद्धिमाप्नुयात्॥तस्माच्चक्रंविचार्यैवमित्रंचेत्सर्वसिद्धिदं॥ ३८ ॥
यस्मिन्देशेदीपयतेसुगुणंनाममंत्रयोः ॥ तत्रयत्नेनगंतव्यंसपीठोदुर्लभोमतः ॥ ३९ ॥ रु
द्राक्षैरपिपद्माक्षैःपुत्रजीवकचंदनैः ॥ स्फटिकैश्चप्रवालैश्चकुशग्रंथिभवैस्तथा ॥ ४० ॥ तथा
कमलसंभूतैस्तुलसीकाष्ठनिर्मितैः ॥ एभिश्चमालिकांकुर्यान्मतिमान्वैष्णवेमनौ ॥ ४१ ॥
रुद्राक्षसंभवायातुअनंतफलदामता ॥ पुंडरीकभवामालागोपालमनुसिद्धिदा ॥ ४२ ॥ पुत्र
जीवभवायातुपुत्रंवितनुतेऽचिरात् ॥ कुचंदनभवामालाराज्यभोगापवर्गदा ॥ ४३ ॥ प्रवा
लनिर्मितायातुसर्ववसत्ववशंकरी ॥ कुशग्रंथिभवामालाधर्मवृद्धिकरीमता ॥ ४४ ॥ आमल
कीभवामालासर्वसिद्धिप्रदामता ॥ तुलसीसंभवायातुमोक्षंवितनुतेऽचिरात् ॥ ४५ ॥ अ
ष्टोत्तरशतमणिनिर्मितायातुमालिका ॥ राज्यंवितनुतेनृणांदेहांतेमोक्षदायिनी ॥४६ ॥ मोक्षा
र्थीपंचविंशत्यापुत्रार्थीत्रिंशताजपेत् ॥ चत्वारिंशन्मणिभवाअभिचारायकेवलं ॥ ४७ ॥ पं
चाशन्मणिभिर्मालासर्वकर्मप्रसाधिका ॥ अकारादिक्षकारांताअक्षमालेतिकीर्तिता ॥ ४८ ॥
क्षांतंमेरुमुखंतत्रकल्पयेन्मुनिसत्तम ॥ अनयासर्वमंत्राणांजपःसर्वसमृद्धिदः ॥ ४९॥ नित्यं

जपंकरेकुर्यान्नतुकाम्यमबोधनात् ॥ आरभ्याऽनामिकामध्यात्परिवर्तेनवैक्रमात् ॥५०॥तर्जनीमूलपर्यंतंजपेद्दशसुपर्वसु ॥ गोपालतंत्रमंत्राणांकरमालेयमीरिता ॥ ५१ ॥ कार्पाससंभवंसूत्रंपुण्यस्त्रीभिर्विनिर्मितम् ॥ अथवापट्टसूत्रेणस्वर्णसूत्रेणवातथा ॥ ५२ ॥ अणिमादयो मोक्षांताःसिद्धयःस्वर्णसूत्रके ॥ पदसूत्रंवश्यकरंधनपुत्रविवर्धनम् ॥५३॥ कार्पाससंभवंसूत्रं धर्मकामार्थमोक्षदम् ॥ त्रिगुणंत्रिगुणीकृत्यग्रंथयेच्छिल्पशास्त्रतः ॥ ५४ ॥ मुखेमुखंतुसंयोज्यपुच्छेपुच्छंनियोजयेत् ॥ गोपुच्छसदृशीमालाथवासर्पाकृतिःशुभा ॥ ५५ ॥ एवंनिर्माय मालांवैशोधयेन्मुनिसत्तम ॥ अश्वत्थपत्रनवकैःपद्माकारंतुकारयेत् ॥ ५६॥ तन्मध्येस्थापयेन्मालांमातृकामूलमुच्चरन् ॥ नित्यंनैमित्तिकंकृत्वासामान्यार्घनिधायच ॥ ५७ ॥ घर्षयेद्वामदेवेनप्रत्येकंमणिकांपुनः ॥ क्षालयेदीशसूक्तेनलेपयेत्पुरुषेणतु ॥ ५८ ॥ गंधैरनल्पैर्मतिमानघोरेणतुधूपयेत् ॥ सद्योजातेतिसूक्तेनशताऽन्यूनेनमंत्रयेत् ॥ ५९ ॥ वामदेवेनसूक्तेनसमीकुर्याद्विचक्षणः ॥ एकैकंमणिमादायब्रह्मग्रंथिंप्रकल्पयेत् ॥ ६० ॥ एवंसंग्रंथितांमालांपुनःपत्रोपरिन्यसेत् ॥ तत्रावाह्ययजेद्देवंयथाविभवविस्तरैः ॥ ६१ ॥ मंत्रयेन्मूलमंत्रेण क्रमेणोत्क्रमयोगतः ॥ तत्रैवमातृकावर्णैर्मंत्रयेन्मंत्रतत्ववित् ॥६२॥क्षालयेत्पंचगव्येनपुनरीशानसूक्ततः ॥ पुनर्विलिप्यगंधेनजपेन्मंत्रंयथेच्छया ॥ ६३ ॥ नान्यंमंत्रंजपेन्मंत्रीकंपशेऽन्

विधूनयेत् ॥ कंपनात्सिद्धिहानिःस्याद्धूननंबहुदुःखदम् ॥ ६४ ॥ शब्देजातेभवेद्रोगःकर
भ्रष्टेविनाशकृत् ॥ छिन्नेसूत्रेभवेन्मृत्युस्तस्माद्यत्नपरोभवेत् ॥ ६५ ॥ जपांतेकर्णदेशेवा
उच्चस्थानेचविन्यसेत् ॥ त्वंमालेसर्वदेवानांसर्वसिद्धिप्रदामता ॥ ६६ ॥ तेनसत्येनमेसिद्धिं
देहिमातर्नमोऽस्तुते ॥ इत्युक्त्वापरिपूज्याथगोपयेद्यत्नतोयतिः ॥६७॥ मालांमुद्रांचयंत्रंच
पशुभ्योनप्रकाशयेत् ॥ प्रकाशनेसिद्धिहानिरित्युक्तंतंत्रवित्तमैः ॥ ६८ ॥ अंगुष्ठतर्जनीभ्यां
चजपाच्छुभशतंभवेत् ॥ तर्जन्यंगुष्ठयोगेनशत्रूच्चाटनकारकः ॥ ६९ ॥ अंगुष्ठमध्यमायो
गान्मन्त्रसिद्धिःसुनिश्चिता ॥ अंगुष्ठानामिकायोगादुच्चाटोत्सादनेमते ॥ ७० ॥ जेष्ठाक
निष्ठायोगेनशत्रूणांनाशनंमतम् ॥ इतितेकथितोविद्वन्मालायाःपरिनिर्णयः ॥ ७१ ॥ श
क्त्यात्रिषवणंस्नानमन्यथाद्विःसकृत्तथा ॥ त्रिसंध्यंप्रजपेन्मन्त्रंपूजनंतत्समंभवेत् ॥ ७२ ॥
एकदावाभवेत्पूजानजपेत्पूजनंविना ॥ प्रातःकालेऽथवापूजाजपांतेवायजेद्धरिम् ॥७३॥ प्रा
तःकालंसमारभ्यजपेन्मध्यंदिनावधि ॥ पशुभावेस्थितामंत्राःकेवलावर्णरूपिणः ॥ ७४ ॥
सुषुम्णाध्वन्युच्चरिताःप्रभुत्वंप्राप्नुवंतिते ॥ मंत्राक्षराणिचिच्छक्तौप्रोतानिचविभावयेत् ॥७५॥
तामेवपरमेव्योम्निपरमामृतबृंहिताम् ॥ दर्शयत्यात्मसद्भावंपूजाहोमादिभिर्विना ॥ ७६ ॥
मनःसंहृत्यविषयात्मंत्रार्थगतमानसः ॥ नद्रुतंनविलंबंचजपेन्मौक्तिकपंक्तिवत् ॥ ७७ ॥

जपःस्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः ॥ धियायदक्षरश्रेणिंवर्णस्वरपदात्मिकाम् ॥७८॥ उच्चरेदर्थमुद्दिश्यमानसःसजपःस्मृतः ॥ जिव्होष्ठौचालयेत्किंचिद्देवतागतमानसः ॥ ७९ ॥ किंचिच्छ्रवणयोग्यःस्यादुपांशुःसजपःस्मृतः ॥ मंत्रमुच्चारयेद्वाचावाचिकःसजपःस्मृतः ॥ ॥८०॥ पश्यंत्यादित्रिभिर्भेदैःकथितंजपलक्षणम् ॥ मानसःसिद्धिकामानामुपांशुःपुष्टिमिच्छताम् ॥८१॥ वाचिकोमारणेशक्तःकथितंजपलक्षणम् ॥ एवंजपंपुराकृत्वातेजोरूपंसमर्पयेत् ॥८२॥ देवस्यदक्षिणेहस्तेकुशपुष्पार्घवारिभिः॥ सफलंतद्विभाव्यैवंप्राणायामत्रयंचरेत्॥८३॥ जपस्यादौतथाचांतेत्रितयंत्रितयंचरेत् ॥ नन्यूनंनाधिकंचापिजपंकुर्याद्दिनेदिने ॥ ८४ ॥ यदिकुर्यात्प्रमादात्तुतदानिष्टमवाप्नुयात् ॥ न्यूनेन्यूनांगदोषःस्यादधिकेचाधिकांगकम्॥८५॥ यथाविधिकृतानीहफलंत्येतान्ययत्नतः ॥ जपांतेप्रत्यहंमंत्रीहोमयेत्तद्दशांशतः ॥८६॥ तर्पणंसेकमित्येवंतत्तद्दशांशतोमुने ॥ प्रत्यहंभोजयेद्विप्रान्न्यूनाधिकप्रशांतये ॥८७॥ विप्रभोजनमात्रेणव्यंगंसांगंभवेद्ध्रुवम्॥गोषुशुश्रूषणंकुर्याद्गोभ्योऽपियवसप्रदः॥८८॥ गोष्वपिप्रीयमाणासुगोपालोऽयंप्रसीदति॥ कर्मांतेसंस्मरेत्कृष्णमंतःकरणशुद्धये ॥८९॥ नामसंकीर्तनंविष्णोःसर्वविघ्ननिकृंतनम् ॥ अथवालक्षपूर्तौचहोमादिकृत्यमाचरेत् ॥९०॥ संपूर्णायांप्रतिज्ञायांतर्पणादितथाचरेत् ॥ विष्णोर्निवेदितान्नंयद्ब्रान्नैभुंजेदकुत्सयन् ॥९१॥ यदन्नादेवताय



स्यतदन्नःपुरुषोभवेत ॥ ...शास्त्रं ॥ ९२ ॥ एवंप्रतिदिनंकुर्या

ज्ञायांतर्पणादितथाचरेत् ॥ विज्ञोभिर्वदितामेथद्राम्नोमुंजेदकुत्सयम् ॥९१॥ यदन्नादेवताय

स्यतदन्नःपुरुषोभवेत् ॥ शयीतशुभशय्यायांकंबलेवाकुशास्तरे ॥ ९२ ॥ एवंप्रतिदिनंकुर्या
यावत्सांगंव्रतंचरेत् ॥ होमंचपूर्ववत्कुर्यात्पायसैरथवांबुजैः ॥९३॥ होमाभावेजपंकुर्याद्धोम
संख्याचतुर्गुणम् ॥ षड्गुणंचाष्टगुणितंयथासंख्यंद्विजातयः ॥ ९४ ॥शूद्रस्यविप्रभृत्यस्यत
त्पत्नीसदृशोजपः ॥ होमशून्यस्यविप्रस्ययोजपःसतुतत्स्त्रियः ॥ ९५ ॥ दशाक्षरंमनुवरं
सिद्धयेदशलक्षकम् ॥ जप्त्वातदंतेहोमादिविधिनाकर्मचाचरेत् ॥९६॥ दशाक्षरंजपन्मंत्रीस
हस्रदशकंजपेत् ॥ प्रत्यहंमुख्यकल्पोऽयमन्यन्न्यूनमुदाहृतम् ॥९७॥अष्टादशार्णमनुवरंपंच
लक्षंजपेत्ततः ॥ कृत्यमेवंसमुद्दिष्टमन्यत्तत्कल्पसंग्रहात् ॥ ९८ ॥ तर्पणंतुततःकुर्यात्तीर्थादु
श्चन्द्रमिश्रितैः ॥ जलेदेवंसमावाह्यपाद्याद्यैरुदकात्मकैः ॥९९॥ संपूज्यविधिवद्भक्त्यापरिवा
रसमन्वितम् ॥ एकैकमंजलींतोयंपरिवारान्प्रतर्पयेत् ॥ १००॥ ततोहोमदशांशेनतर्पयेत्पु
रुषोत्तमम् ॥ आदौमंत्रंसमुच्चार्यश्रीपूर्वंकृष्णमित्यपि ॥१ ॥ तर्पयाम्यहमित्युक्त्वानमोंतस्त
र्पणेमनुः ॥ तर्पणस्यदशांशेनअभिषेकंतथाचरेत् ॥ २ ॥ न्यासानशेषान्कृत्वावैतदभेदेन
पूजयेत् ॥ कृष्णात्मानंस्वमात्मानंध्यात्वारश्मिसमन्वितम् ॥३॥ कुसुमंकुशमेकंचसुगंधिप
रिमिश्रितम् ॥ जलांजलिंसमादायमूलमुच्चार्यसाधकः ॥ ४ ॥ श्रीकृष्णमभिषिंचामिनमइ
त्यभिषिंचयेत् ॥ अभिषेकदशांशेनब्राह्मणान्परितर्पयेत् ॥ ५ ॥ क्षीरखंडाज्यभोज्यैश्चबहु

मानपुरस्सरम् ॥ विप्रभोजनमात्रेणव्यंगंसांगंभवेद्ध्रुवम्॥६॥सर्वथाभोजयेद्विप्राँस्तेवैकृष्णतनुर्यतः ॥ यत्रभुंक्तेद्विजस्तुष्यात्तत्रभुंक्तेहरिःस्वयम् ॥ ७ ॥ यत्रभुंक्तोश्रियःकांतस्तत्रभुंक्तेजगत्त्रयम् ॥ गुरवेदक्षिणांदद्यात्भोजनाच्छादनादिभिः ॥ ८ ॥ गुरुसंतोषमात्रेणमंत्रसिद्धिर्भवेद्ध्रुवम् ॥ गुरुमूलमिदंसर्वमित्याहुस्तंत्रवेदिनः ॥ ९ ॥ मिष्टान्नंबहुशःकार्यंभुंजीतबंधुभिःसह ॥ एवंसिद्धमनुर्मंत्रीसाधयेत्सकलेप्सितम् ॥ ११० ॥ इतिश्रीगौतमीयतन्त्रे पंचदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

नारदउवाच ॥ एवंनित्यंकर्मकृत्वानैमित्तिकमथाचरेत् ॥ कृतेनैमित्तिकेविप्रनित्यस्यापूर्णताभवेत् ॥ १ ॥ अन्यथानैवसिद्धिःस्यादनुष्ठानशतैरपि ॥ मथुरायांमहाक्षेत्रेवसन्कृष्णंसमर्चयत् ॥ २ ॥ लक्षमात्रंजपेन्मंत्रंमंडलादीप्सितंभवेत् ॥ मंदारस्यमहारण्येसरलद्रुमकानने ॥३॥ पुष्पैर्वन्यसमुद्भूतैर्दुग्धाशीविजितेंद्रियः॥लक्षमात्रंजपेद्भक्त्याकृष्णंपश्यतिचक्षुषा ॥४॥ वृंदावनगतोमंत्रीद्वात्रिंशत्स्थानमाश्रितः ॥ लक्षंकृत्वाजपेद्भक्त्याअणिमादिगुणोभवेत्॥५॥ समुद्रगासरिन्मध्येकुट्टिमेनिवसन्मुनिः ॥ दुग्धाहारोजपेल्लक्षंपापंकोटिभवोद्भवम् ॥ ६ ॥ नाशयेन्नात्रसंदेहोवाक्सिद्धिंचापिविंदति ॥ पर्वताग्रेयजेत्कृष्णंशाकमूलफलाशनः ॥ ७ ॥ लक्षंतत्रापिसंजप्यखेचरीमेलकंभवेत् ॥ समुद्रेवानदीतीरेतुलसीकाननेवसन् ॥ ८ ॥ लक्ष

लक्षंतत्रापिसंजप्यखेचरी[illegible]भवेत् ॥ [illegible]नवसन् ॥ ८ ॥ लक्ष



मात्रंजपेत्तत्रकोटिजन्माघनाशनम् ॥ पुंडरीकवनेकृष्णंमासमेकंसमर्चयेत् ॥९॥ धर्मार्थका ममोक्षाँश्चकरस्थान्प्रलभेद्ध्रुवम् ॥ तुलास्थेभास्करेपद्मैर्हुनेद्दशसहस्रकम् ॥१०॥ लक्ष्मीस्थि राभवेत्तस्यपुत्रपौत्रानुयायिनी ॥ श्रीपुष्पैर्जुहुयान्मंत्रीवैशाखेमासिसहस्रकम् ॥ ११॥ सर्व पापक्षयकरःसर्वसिद्धिविवर्द्धकः ॥ देवाःसर्वेनमस्यंतिभक्त्यातंपुरुषोत्तमम् ॥ १२ ॥ शीत लैस्तर्पयेत्कृष्णंमत्स्यंडीचंद्रसंयुतैः ॥ अष्टोत्तरशतंकृत्वापुजांतेभक्तितत्परः ॥ १३ ॥ मंड लाल्लभतेसिद्धिंदुष्करांसुकरांतुवा ॥ यद्यत्कामयतेमंत्रीअनायासेनतल्लभेत् ॥ दुग्धबुध्याज लैर्नित्यमष्टोतरशतंजपेत् ॥ १४ ॥ तर्पयन्निखलान्कामान्लभेन्मोक्षंचविंदति ॥ कुश पुष्पैःसमभ्यर्च्यमासमात्रंनिरामयः ॥ १५ ॥ यशसेधर्मवृद्ध्यैचब्रह्मचारिव्रतेस्थितः ॥ हया रिकुसुमैःशुक्लैर्मंडलाद्वाछितंभवेत् ॥ १६ ॥ तथारक्तास्यभारेणअचलांभुक्तिमाप्नुयात् ॥ तथाद्दाभ्यांसमाभ्यर्च्यभुक्तिंमुक्तिंचविंदति ॥१७॥ गोषुभक्तिःसदाकार्यागोपुकंडूयनंतथा॥ गोषुनित्यंप्रसन्नासुगोपालःसंप्रसीदति ॥१८॥ ब्राह्मणानांक्षत्रियाणांवैश्यानांशेषजन्मनां ॥ स्त्रीणांचैवमहाबाहोनैमित्तिकमिदंस्मृतं ॥१९॥ एतेषांचैकमात्रंतुकृत्वाकाम्यानिसाधयेत् ॥ २०॥ इतिश्रीगौतमीयतन्त्रे षोडशोऽध्याय ॥ १६ ॥ ॥ छ ॥ ॥ छ ॥

नारदउवाच० ॥ त्रिकालाभ्यर्च्यनंवक्ष्येगोविंदस्ययथाविधि ॥ मंत्रयोरुभयोःकार्यमन्येषां

चतदात्मनः ॥१॥ कलायकुसुमश्यामंनलिन्दीवरलोचनम् ॥ वार्षिकंचशिशुंमुग्धमासीनंप
द्मविष्टरे॥ २॥नवविद्रुमबिंबाभकरपादाधरोत्तरम् ॥ गुडालकचयाच्छन्नमुखेन्दुग्रहसंयुतम् ॥
पूर्णेन्दुकाशसंकाशहासभावितादिङ्मुखम् ॥राजदंतद्वयोद्भासनिंदितानेकमौक्तिकम्॥ ३॥ म
हाश्मरश्मिसंकीर्णसुवर्णानेकभूषणम् ॥ सपुष्टंधूसरांगंचधेनुधूल्यापदोत्थया ॥ ४॥ गोपगो
पीगवांवृंदैर्वीक्ष्यमाणंसुविस्मितैः ॥ब्रह्मणाशङ्करेणापिप्रेमोत्कंठ्यात्सुवीक्षितम् ॥ ५ ॥ पुरंद
रदरसुखैर्देवैर्मुनिभिःसंस्तुतंपरम् ॥ एवंध्यात्वाजपेत्कृष्णंयजेद्भक्तिप्रधानतः ॥ ६॥ अंगैरि
न्द्रादिवज्राद्यैरष्टात्तित्रितयान्वितम्॥क्षीरखंडाज्यदुग्धंचकदलीनवनीतकम् ॥७ ॥मोचारंभा
फलंवापिअन्यद्बालाप्रियंचयत् ॥ जपंचाष्टसहस्रंचकृत्वाकृष्णंप्रसादयेत् ॥ ८ ॥ स्तोत्रैर्ना
नाविधैर्भक्त्यानमस्कारप्रदक्षिणैः ॥ दुग्धबुध्याजलैरष्टाशतंसंतर्प्यमंत्रवित् ॥ ९ ॥ आत्मानं
तत्पदांभोजेअनन्यःसन्समर्पयेत् ॥ ब्रह्मार्पणाख्यमंत्रेणतथोद्वास्यत्द्धदंनयेत् ॥ १० ॥ य
एवंमासमात्रंतुभक्त्याकृष्णंसमर्चयेत् ॥ पूज्योलोकैःकविर्वाग्मीलक्ष्मींप्राप्यानपायिनीं ॥
११ ॥ पुत्रैर्मित्रैश्चसंनद्धःप्रयात्यंतेपरमंपदम् ॥मध्यान्हेवासुदेवंचराजमंडलमध्यगम्॥ १२॥
द्वारवत्यांसहस्रार्कदीपितेभवनांतरे ॥ कल्पवृक्षसमाकीर्णेपुण्यपक्षिनिनादिते ॥ १३ ॥ प
द्मोत्पलादिसंकीर्णवापीभिःसमलंकृते ॥ तस्मिन्सुपुलिनेरम्येछायायांकल्पशाखिनः ॥१४॥

ग्नोत्पलादिसंकीर्णवापीभिः समलंकृते ॥ नानारत्नसुपुलिनरत्नवापीकल्पशाखिनः ॥१४॥


रत्नस्तंभैरत्नदीपैर्मुक्तादामविभूषिते ॥ नानारत्नविचित्रांतार्वितानशतसंकुले ॥ १५ ॥ तत्पार्श्वेचवनंध्यायेत्पुन्नागैर्नागकेसरैः॥ तथानानाविधैर्वृक्षैःपाटलैश्चंपकादिभिः ॥ १६॥ बाकुलैश्चवनैरम्यैर्वेष्टितंक्रमुकैरपि ॥ सर्वर्तुकुसुमोपेतैःपुष्पावनतशाखिभिः ॥ १७ ॥ रत्नसिंहासनासीनंपुंडरीकदलेक्षणम् ॥ पृथूरस्कंसुपुष्टांगंराजन्यगणमोहनम् ॥ १८ ॥ पुंडरीकनिभानाभिंपुंडरीकाक्षमव्ययम् ॥ सुभ्रूललाटवदनंपुष्पहासंसुलोचनम् ॥ १९ ॥ सुकपोलंसुताम्रोष्ठंश्यामलंमंगलालयम् ॥ नीलकुंचितकेशांतंविचित्रांगविभूषणम् ॥२०॥ कंबुग्रीवंसुविस्तीर्णकौस्तुभोद्भासिवक्षसम्॥ महाबलंमहोरस्कंमहाभुजचतुष्टयम् ॥२१॥ बलिबंधुरमध्येतुराजदुदरशोभितम्॥प्रदक्षिणगतश्रीमद्वृत्तनाभिविशोभितम्॥२२॥समोरुजानुजंघाभिःस्वस्तिकांघ्रियुगांबुजम् ॥ तुंगरत्ननखंचित्रतुंगपादांगुलीयकम्॥२३॥अनेकविधरत्नादिपीतांबरयुगावृतम् ॥ स्फुरितोदरबंधेनशोभितंवनमालया॥ २४॥ रत्नहारैश्चसौवर्णैर्ग्रैवेयकविभूषितम् ॥ केयूरमणिसंनद्धराजद्भुजचतुष्टयम्॥२५॥ विचित्रकटकैर्युक्तंनूपुरैःपादशोभितम्॥नानारत्नमयैर्हैमैरंगुलीयैर्विराजितम्॥२६॥अनंतरत्नसंछन्नंस्फुरन्मकरकुंडलम् ॥सुवर्णनाभिरुचिरंनानाचित्रविचित्रितैः॥२७॥लोलद्भ्रमरसंच्छन्नैःप्रसूनैर्मुकुटोज्ज्वलम् ॥शंखचक्रगदापद्मधरंशांतमुखेक्षणम् ॥२८॥ दिव्यलक्षणसंपन्नंदिव्यभूषणभूषितम् ॥ दिव्यमा

लांबरधरंदिव्यगंधानुलेपनम् ॥ २९ ॥ ललाटेहृदयेकुक्षौकंठेबाह्वोश्वपार्श्वयोः ॥ विराजि
तोर्ध्वपुंड्रेनचंदनेनविभूषितम् ॥ ३० ॥ महीभारसुराराती॑स्तर्जयंतंमुहुर्मुहुः ॥ तेषांनिपातनार्थे
वधर्मार्थनीतियुक्तिभिः ॥ ३१ ॥ उद्धवादिभिर्मंत्रिवरैर्मंत्रयंतंजगाद्धितम् ॥ एवंमध्यान्हसंप्राप्त
कालेध्यायेज्जद्गुरुम् ॥ ३२ ॥ आवाह्यविधिवद्भक्त्यापूजयन्नुपचारकैः ॥ अंगंपूर्ववदुद्दिष्टं
पुरआदिप्रपूजयेत् ॥ ३३ ॥ रुक्मिणीसत्यभामाचकालिंदीचसुलक्षणा ॥ नाग्नजितीजांबुवती
मित्रविंदासुशीलका ॥ ३४ ॥ इत्यष्टशक्तीर्देवस्यपूज्याःकृष्णस्यवल्लभाः ॥ आग्नेसुदर्शनं
चक्रंनैरृतेशंखंजलोद्भवम् ॥ ३५ ॥ वायव्येचगदांदिव्यामीशानेचततोंबुजम् ॥ ततोदलानांबा
ह्येचवसुदेवंचदेवकीम् ॥ ३६ ॥ नंदगोपंयशोदांचपुरआदिप्रपूजयेत् ॥ पाद्यैरर्घ्यैस्तथापुष्पैः
पूर्वादिदलतोऽर्चयेत् ॥ ३७ ॥ वलभद्रंसुभद्रांचरोहिणीं रेवतींतथा ॥ सुदामंचतथादामंवसुदा
मंचकिंकणीम् ॥ ३८ ॥ देवस्यवामपार्श्वेतुपूजयेद्गुरुपादुकाः ॥ परमंचगुरुंतत्रपरापरगुरुंतथा
॥ ३९ ॥ पादुकांतंसमभ्यर्च्यपूर्वसिद्धांस्तथायजेत् ॥ पूर्वेगणपतिंचेष्ट्वाइंद्रादींस्तद्बहिर्यजेत्
॥ ४० ॥ कुमुदंकुमुदाक्षंचपुंडरीकंचवामनम् ॥ शंकुकर्णंसर्वनेत्रंसुमुखंसुप्रतिष्ठितम् ॥ ४१ ॥ दक्षि
णावर्ततश्चैतान्पूर्वादिदलतोयजेत् ॥ उत्तरेशानयोर्मध्येविष्वक्सेनंसमर्चयेत् ॥ ४२ ॥ संपूज्यै
वंहरिंभक्त्यानैवेद्यंचनिवेदयेत् ॥ पायसंशर्करापूपेखंडाज्यकदलीफलम् ॥ ४३ ॥ सितोपदंश

वंहारैर्भक्त्यानैवेद्यंचनिवेदयेत् ॥ पायसंशर्करापूपरंभाज्यकदलीफलम् ॥४३॥ सितोपदंश

मन्नंचस्वर्णपात्रेनिवेदयेत् ॥ अथवारौप्यपात्रेचताम्रपात्रेऽथवापुनः ॥ ४४ ॥ अभावात्पद्म
पत्रेवाअन्यथानरकंव्रजेत् ॥ सुवर्णचषकेनाथरौप्येवाविधिनाततः ॥ ४५ ॥ सशर्करंपक्व
दुग्धमन्नंव्यंजनपायसम् ॥ नानाविधोपहाराणिगोविंदायनिवेदयेत् ॥ ४६ ॥ राजोपचारान्
दत्वांतेस्तुत्वानत्वाविसर्जयेत् ॥ यएवंपूजयेद्देवंगोपालंविगतस्पृहः ॥ ४७ ॥ राजानःकिंक
राःसर्वेसामात्याःसपरिच्छदाः ॥राजपुत्राश्चपत्न्यश्चसर्वेतस्यानुवर्तिनः॥ ४८ ॥ इहभुक्त्वाव
रान्भोगानंतेविष्णोःपदंव्रजेत् ॥ अष्टोत्तरशतंहोमंकुर्यात्तत्संख्ययाद्दतः ॥ ४९ ॥ होमतर्पण
योर्मंत्रीसाधयेदखिलानपि ॥ प्रातर्होमंप्रकुर्वीततथामध्यदिनेऽथवा ॥ ५० ॥ रात्रिहोमंच
सायान्हेकुर्यादेवंविधिःस्मृतः ॥ तृतीयकालपूजायामस्तिकालविकल्पना ॥ ५१ ॥ साया
न्हेनिवसेत्तत्रवदंत्येकेविपश्चितः ॥ अष्टादशार्णंसायान्हेरात्रौचेद्दशवर्णकम् ॥५२ ॥ उभयो
रुभयेनैववदंतिब्रह्मवादिनः ॥ सायान्हेद्वारवत्यांतुचित्रकोद्यानमध्यगे ॥ ५३ ॥ सौगंधि
कोत्पललसद्दीर्घिकाशतवेष्टिते ॥ नंदनोद्यानमध्येतुकदंबवनमध्यगम् ॥ ५४ ॥ ज्वलद्रत्न
मयैःस्तंभैःसुवर्णविधिकान्विते ॥ नानारत्नमयलसत्प्रवालद्वारशोभिते ॥ ५५ ॥ महारत्न
मयंगेहंमुनिभिःपरिवेष्टितम् ॥ नारदाद्यैर्मुनिवरैःशौनकैःपिप्पलादिभिः ॥५६ ॥ सनकादि
ब्रह्मपुत्रैःपरीतंतत्वनिर्णये ॥ नारदंपर्वतंजिष्णुंनिशठोद्धवदारुकौ ॥ ५७ ॥ विष्वक्सेनंचशै

नेयंरूपादृष्टिविलक्षितम् ॥ तेभ्योमुनिभ्यःस्वंधामादिशंतंपरमक्षरम्॥५८॥ चंद्रकोटिप्रतीका शंविश्वावकाशदीपिते ॥ नानारत्नगणाकीर्णमहामुकुटभूषितम् ॥५९॥ अनेकरत्नरश्मी भिर्लसन्मकरकुंडलम् ॥ तारहारावलिलसन्मुक्ताकौस्तुभवक्षसम् ॥६०॥ नानारत्नगणा कीर्णकेयूरवलयाष्टकम् ॥ विद्रवत्कनकाभासंपीतांबरयुगावृतम् ॥ ६१ ॥बंधुरोदारजठरं गंभीरनाभिपंकजम् ॥ उत्तुंगचरणांभोजलसत्स्वर्णांगुलीयकम्॥६२॥ प्रदीप्तरत्नकटकंतु लाकोटिद्वयान्वितम् ॥ शशरक्ताधरपुटमारक्तपदपंकजम् ॥६३॥ शंखचक्रगदापद्मधारि णंवनमालिनम् ॥ शुद्धज्ञानस्वभावत्वात्सुशुक्लंतंपरात्परम्॥ ६४॥अज्ञाननाशकामत्वान्नव वारिदसन्निभम् ॥ सूर्यकोटिप्रतीकाशमविद्याध्वांतनाशनात् ॥ ६५ ॥इत्येवंपरात्मानंध्या यंतिब्रह्मवादिनः ॥ एवंध्यात्वामध्यमार्चाविधानेनप्रपूजयेत्॥६६॥ सहस्रैकंजपेन्मंत्रंहोमा दशांशतर्पणम् ॥ रजतारचितेपात्रेखंडदुग्धंनिवेदयेत् ॥ ६७॥ पूर्वोपचारान्दत्वावैनमस्कृ त्याविसर्जयेत् ॥ गृहस्थानामयंपंथान्यासिनांहृदयांबुजे ॥ ६८ ॥ ध्यात्वासंपूज्यमुनिभि र्मानसैरुपचारकैः ॥ विरक्तोगृहमेधीचवनस्थोऽप्यथवामुनिः ॥ ६९ ॥ वासुदेवंसमाराध्य निर्वाणंपदमाप्नुयात् ॥ सायान्हेवासुदेवंचपूजयेद्विधिनानरः ॥ ७० ॥ देवाःसर्वेनमस्यंति किंपुनर्नरमर्कटाः ॥ संसारसागरंघोरंविषयग्राहसंकुलम्॥ ७१ ॥ संतीर्यविषयान्मुक्ताज्ञा

किंपुनर्नरमर्कटाः ॥ संसारसागरंघोरंविषयग्राहसंकुलम् ॥ ७१ ॥ संतीर्यविषयान्मुक्त्वाज्ञा



नीतत्पदमाप्नुयात् ॥ दुर्वासनाम्परित्यज्यकोटिजन्मसमुद्भवाम् ॥ ७२ ॥ एकेनजन्मनामुक्तियातिकैवल्यनिर्मिताम् ॥ 'तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः॥७३॥ दिवीवचक्षुराततं' सर्वंचविषयाततम् ॥ रात्रौचेन्मदिराक्रांतमानसंदेवकीसुतम् ॥७४॥ रासगोष्ठीपरिज्ञातंगोपीमंडलमध्यगम् ॥ वृंदावनगतंध्यायेत्छायायांकल्पशाखिनः ॥७५॥ सुस्थिरंवेणुगायंतं वनमालापरिष्कृतम् ॥ संघमध्यस्थितंकृष्णंगोपिकासंघवेष्टितम् ॥७६॥ देवासुरैश्चगंधर्वैरप्सरोभिश्चसेवितम् ॥ यक्षैर्विद्याधरगणैर्विहंगैर्भूवियद्गतैः ॥ ७७ ॥ ब्रह्मर्षिभिर्देवर्षिभिःस्तूयमानंसुविस्मितैः ॥ लेलिह्यमानंप्रणयाद्देवस्त्रीशतकोटिभिः ॥ ७८ ॥ इंदीवरनिभंरत्नसुंदरेन्दुनिभाननम् ॥ सम्फुल्लपद्मवदनंपद्मपत्रनिभेक्षणम् ॥७९॥ पद्मनाभिपाणिपादंपद्मरागनिभाधरम् ॥ शरण्यंसर्वदेवानांगोपिकाजनवल्लभम् ॥ ८०॥ क्वाचित्क्वाचित्परिमिलत्त्यंबुजोपरिसंस्थितम् ॥ कल्पितानेकदेहेननारीणांशतकोटिभिः ॥ ८१ ॥ वेष्टितंरममाणंचगायंतंदिव्यमूर्छनाम् ॥ द्वाभ्यांद्वाभ्यांवल्लभाभ्यांमध्येमध्येविराजितम् ॥ ८२॥ यथामरकतस्तंभंसुवर्णेनाभिवेष्टितम् ॥ क्वाचिद्रोपांगनावस्त्रहारिणंहेलयान्वितम् ॥८३॥ क्वाचिद्धसंतंहासयंतंस्त्रीवृंदमुपहासकैः ॥ विस्मितैर्देवनिकरैरर्चितंपुष्पवृष्टिभिः ॥ ८४ ॥ देवस्त्रीभिर्वीज्यमानंकामोत्कटितचेष्टितैः ॥ एवंध्यात्वामधुरिपुंयजेत्तंशंसितव्रतः ॥ ८५ ॥ मिथुनैर्वैषो

डशकैःकेशवादिभिरावृतम् ॥ महिषीभिस्तथान्वितंगोपीभिरपिसर्वतः ॥ ८६ ॥ एवमभ्य
र्च्यविधिनाकांस्येवारजतांचिते ॥ पात्रेदुग्धंनिवेद्याथमिथुनेभ्यस्तथार्चयेत् ॥ ८७ ॥ ज
प्त्वास्तुत्वानमस्कृत्यहृत्पद्मेतांविसर्जयेत् ॥ एवमभ्यर्च्यजगतांपतिंशुद्धमनीषया ॥ ८८ ॥
धर्मार्थकाममोक्षाणांदायादोभवतिध्रुवम् ॥ विप्रोदेवाधिपोभूयात्साक्षाद्भुविपुरंदरः ॥ ८९ ॥
क्षत्रियोराजवर्यश्चवैश्योधनसमृद्धिमान् ॥ शूद्रःसुखानिसर्वाणिभुक्त्वाचांतेपरंव्रजेत् ॥
॥९०॥ एवंतेकथितंविप्रसंसारभयनाशनम् ॥अर्चनंत्रिविधंयत्तेमूलाविद्यानिकृंतनम्॥९१॥
॥ इतिश्रीगौतमीयतन्त्रे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ छ ॥
॥ गौतम उवाच ॥ ब्रूहिमेबालकृष्णस्यतत्त्वंसार्वज्ञकारणम् ॥ब्रह्मणायत्पुराप्रोक्तंसेवयातप
सातव ॥ १ ॥ यत्प्रसादान्मुनिश्रेष्ठत्रैलोक्येऽविदितंनते ॥ यथाक्रमंकथयमेसर्वंमे
वसमाहितः ॥ सुश्रूषामेबलवतीगोपालस्यार्चनंप्रति ॥ २ ॥ ॥ नारदउवाच ॥ बा
ल्यंतेकथयाम्यद्यदेवस्यपरमाद्भुतम् ॥ गोपनीयंनतेकिंचित्त्वंहिवेदाविदांवरः ॥३॥ तपसाक
ल्पनाहीनःकृष्णेन्भक्तोऽसिनिश्चयात् ॥ तारःप्रजापतिःशक्रोमायाचबिंदुरेवच॥४॥एतन्मंत्र
वरंविद्धिरहस्यंपरमाद्भुतम् ॥ महाचमत्कारकरंविश्वक्षोभणकारकम् ॥५॥ चतुर्वर्गफलंचा
स्यजपमात्रेणसिध्यति ॥ गोपालस्यापियेमंत्रावक्ष्यंतेऽत्रैवमंत्रके ॥ ६॥ संदीपितमनेनैव

फलप्रदमवेक्ष्यताम् ॥ चूडामणिरयंप्रोक्तोदेवस्यशिशुरूपिणः ॥७॥ अहंमुनिःसमाख्यातो गायत्रीछंदउच्यते ॥ देवताकथितःकृष्णःसर्वकामफलप्रदः ॥ ८ ॥ समाहारोच्चारणेऽयं मध्यमःस्वरईरितः ॥ नेत्राब्धितर्कसूर्येंद्रैःकलवर्णविभेदितैः ॥ ९ ॥ पंचांगानिमनोःकृत्वा ध्यानंकुर्यात्समाहितः ॥ मथुरायांपुरेध्यायेत्कंसस्यांतःपुराजिरे ॥ १० ॥ सूतिकागृहमध्य स्थंजातमात्रंजगत्पतिम् ॥ सिद्धचारणगंधर्वदेवदानवकिन्नरैः ॥११॥ यक्षराक्षसवेतालैःखे चरैर्भूचरैरपि ॥ विद्याधरीभिर्देवीभिःकिन्नरीभिःसमंततः ॥ १२ ॥ ब्रह्मणातनयैःसार्द्धंवी क्ष्यमाणंमुदान्वितैः ॥ इंन्द्रादिभिश्चदिक्पालैर्लसत्कुसुमवार्षिभिः ॥ १३ ॥ चतुर्भुजंशंखच क्रगदाशार्ङ्गधरंहरिम् ॥ दक्षस्योर्ध्वेकरेचक्रंगदांचतदधःकरे ॥ १४ ॥ वामस्योर्ध्वेशार्ङ्गधनुः शंखंचतदधःकरे ॥ नवीनजलदप्रख्यंपीतकौशेयवाससम् ॥ १५ ॥ विलसत्कुंतलाभोग भास्वरेनिजमूर्द्धनि ॥विहिताशेषसद्रत्नशोभिकर्णकिरीटकम्॥१६॥सुगंधिपारिजातैश्चशोभि ताशेषकुंतलैः ॥ ललाटतलविन्यस्तकस्तूरीतिलकोज्ज्वलम् ॥१७॥ अष्टमीचंद्रशकलभा सिभासप्रभोज्वलम् ॥ उत्फुल्लपुंडरीकश्रीनयनद्वयभूषितम् ॥१८ ॥ मनोभवधनुःकल्पार्च ल्लिचापविराजितम् ॥ तिलप्रसूनाविजयीवासावंशाविभूषितम् ॥१९॥ परार्द्धचंद्रसंकाशमुख चंद्रविराजितम् ॥ दाडिमीबीजकुंदाभदंतपंक्तिविराजितम् ॥२०॥ पक्वबिंबफलोद्भासिदं

तवासोज्ज्वलंविभुम् ॥जांबूनदानेकरत्नस्फुरन्मकरकुंडलम् ॥२१॥महामरकतस्तंभभासमानभुजद्वयम्॥रत्नचामीकराभोगैरंगदैर्वलयैर्युतम्॥२२॥कंबुग्रीवंमहोरस्कंमुक्ताहारविराजितं॥श्रीवत्सलांच्छनंभ्राजत्कौस्तुभोज्ज्वलवक्षसं ॥ २३ ॥ रत्नवैडूर्यघटितांकिंकणीजालमालिनं ॥ पट्टसूत्रेणसंनद्धमध्यदेशोपशोभितं ॥ २४ ॥ रत्नमंजीरयुगलमंजुश्रीपादवल्लभं ॥ देवक्यावसुदेवेनहरेणाविधिनातथा ॥२५॥ विदिक्षुतिष्ठतास्तोतुंमुखरेणपुटांजलिम् ॥ मेरुशृंगप्रतीकाशगरुडोपरिसंस्थितं ॥ २६ ॥ एवंध्यात्वापरात्मानंगुरुमात्मानमेवच ॥ एकोभावेनसंभाव्यततःपूजनमारभेत् ॥ २७ ॥ कर्पूरमिलितालोलसितचंदनचर्चितं ॥ आलिखेद्देवकीपुत्रयंत्रंशोभनरेखया ॥ २८ ॥ शलाकयावैद्रुमयाहैमयाराजतेनवा ॥ किंजल्करूपकंवृत्तंततोलेख्यंचतुर्दलं ॥ २९ ॥ ततोवृत्तंचाष्टदलंवृत्तंदशदलंततः ॥ समरेखंचतुष्कोणंचतुर्द्वारोपशोभितं ॥ ३० ॥ बीजशोभिचतुर्द्वारंचतुष्कोणविराजितं ॥ मध्येसंपूज्यदेवेशंपूजयेत्तच्चतुर्दले ॥ ३१ ॥ ऐशान्यामीश्वरंदेवमाग्नेय्यांचपितामहं ॥ नैर्ऋत्यांवसुदेवंचवायव्यांदेवकीमपि ॥ ३२ ॥ ततश्चाष्टसुपत्रेषुपूजयेद्देववल्लभाः ॥ रक्तांबरधरासौम्यावराभयकरांबुजाः ॥ ३३ ॥ सर्वालंकरणैर्दीप्तालसद्यौवनविभ्रमाः ॥ श्रीमद्देवमुखांभोजन्यस्तनेत्रमधुव्रताः ॥ ३४ ॥ ततोदशदलेपूज्यालोकपालास्ततोबहिः ॥ गरुडंपश्चिमेद्वारेजयंपूर्वेप्रपू

मधुव्रताः ॥ ३४ ॥



जयेत् ॥ ३५ ॥ विजयंदक्षिणेतद्वन्नारदंचतथोत्तरे ॥ पुटांजलिकराःसर्वेसुस्तोत्रमुखराअपि ॥ ३६ ॥ विलसद्वनमालाश्चपीतकौशेयवाससः ॥ ततःशंखंचचक्रंचगदांकौमोकदकीमापि ॥ ३७ ॥ शार्ङ्गधनुश्चसंपूज्यतद्बाह्येपूजयेदपि ॥ ऐरावतादीनभ्यर्च्यगजानष्टौततोबहिः ॥ ३८ ॥ कृतेलक्षंजपेन्मत्रंत्रेतायांद्विगुणंतथा ॥ त्रिलक्षंद्वापरेजाप्यंचतुर्लक्षंकलौजपेत् ॥ ३९ ॥ प्रयोगानथकुर्वीतसाधकःसिद्धिलालसः ॥ लक्ष्मीप्रसूनैर्जुहयाच्छ्रियमिच्छन्ननिंदितां ॥ ४० ॥ साज्येनान्नेनजुहुयादाजन्नस्यसमृद्धये ॥ आरामैःकुसुमैर्विप्रान्जातीभिःपृथिवीपतीन् ॥ ४१ ॥ प्रसूनैरसितैर्वैश्यान्शूद्रान्नीलोत्पलैरपि ॥ वशयेल्लवणैःसर्वान्पंकजैर्वनिताजनान् ॥ ४२ ॥ गोशालासुकृतोहोमःपायसेनससर्पिषा ॥ गवांशांतिंकरोत्याशुगोविंदोगोकुलप्रियः ॥ ४३ ॥ शिशुवेषधरंदेवंकिंकिणीजालशोभितम् ॥ स्मृत्वा प्रतर्पयेन्मंत्रीदुग्धबुध्याशुभैर्जलैः ॥४४॥ धनधान्यांशुकादीनिप्रीतस्तस्मैददातिसः ॥ पिंडं

---

१ पिंडमिति ॥ आदौ षट्कोणं लिखित्वा तन्मध्ये मूलवेष्टितवक्ष्यमाणपिंडबीजं च लिखित्वा वक्ष्यमाणषड्वर्णान् षट्कोणेषु विलिख्य तदुपरि दशदलपद्मं कृत्वा तत्पत्रेषु वक्ष्यमाणदशवर्णवर्णान् लिखित्वा तत्सर्वे कामबीजेन वेष्टयेत् । तदुपरि शोडशदलपद्मं तत्केसरेषु षोडशस्वरान् पत्रेषु वक्ष्यमाणषोडशार्णमंत्रं तदुपरि द्वात्रिंशद्दलं तत्केसरेषु कादिसांतवर्णान् लिखित्वा पत्रेषु वक्ष्यमाणं अनुष्टुप्मंत्रं लिखेत् । तत्सर्वं पाशबीजेन वेष्टयेत् । पुनरंकुशबीजेन वेष्टयित्वा तदुपरि अष्टकोणं कृत्वा तत्कोणेषु वक्ष्यमाणाष्टाक्षरमंत्रवर्णान् लिखेत् । एतद्यंत्रमुक्तफलदं भवतीति तात्पर्यार्थः ।

मूलेनवीतंदहनपुरयुगेकोणराजत्षडर्णं कुर्यात्पद्मंदशार्णस्फुरतिदशदलंकामबीजेनवीतम् ॥ पद्मंकिंजल्कसंस्थंस्वरविकृतिदलेप्रोल्लसत्षोडशार्णं किंजल्केव्यंजनाढ्यंप्रकृतिदलयुगेत्वार्पितानुष्टुबर्णं ॥ ४५ ॥ पाशांकुशाभ्यामावीतंक्षोणीपूरयुगान्वितम् ॥ अष्टाक्षरेणसंवीतंयंत्रंगोविंददैवतम् ॥ ४६ ॥ धर्मार्थकामफलदंसर्वरक्षाकरंस्मृतम् ॥ पंचांतकोधरासंस्थ इंदुबिंदुविभूषितः ॥ ४७ ॥ पिंडबीजमिदंप्रोक्तंसर्वसिद्धिकरंपरं ॥ चतुर्लक्षंजपेदेतत्तद्दशांशंहुनेत्ततः ॥ ४८ ॥ तर्पयेत्तद्दशांशंचदशांशंचाभिषेचयेत् ॥ ब्राह्मणान्भोजयेच्चापिदशांशमितिचक्रमात् ॥ ४९॥ गणेशंभास्करंरुद्रंगौरींचपरिपूजयेत् ॥ विदिक्षुयंत्रराजस्यस्वस्वमंत्रपुरस्सरं ॥ ५० ॥ एतद्धारणमात्रेणत्रिकालज्ञोभवेद्ध्रुवं ॥ यद्यन्निजेप्सितंसर्वंसाधयेन्नात्रसंशयः ॥ ५१ ॥ अनेनसदृशोमंत्रोयंत्रंवापिनविद्यते ॥ केवलंप्रेमभावेनकथितंतवसुव्रत ॥ ५२ ॥ इतिश्रीगौतमीयतन्त्रे अष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥

॥ नारदउवाच ॥ अथप्रयोगान्वक्ष्यामिमंत्रयोरुभयोरपि ॥ यान्कृत्वासाधकवरोलोकत्रयसुपूजितः ॥ १ ॥ तदर्थकारिमंत्रान्वैवक्ष्यामिचक्कचित्क्कचित् ॥ वंदेतंदेवकीपुत्रंसद्योजातंसुसत्प्रभम् ॥ २ ॥ शंखचक्रगदापद्मधारिणंवनमालिनम् ॥ एवंध्यात्वामनुवरंलक्षंब्राह्ममुहूर्तके ॥ जप्त्वामंत्रीत्रिकालज्ञोबृहस्पतिसमोभवेत् ॥ ३ ॥ अथवैतत्समोमंत्रःप्रो

ब्राह्ममुहूर्तके ॥ ज[illegible] ॥ ३ ॥ अथवतत्समामन्त्रःप्रो



च्यतेशृणुतत्वतः ॥ श्रीमत्पदंतथाचोक्त्वामुकुंदचरणौपुनः ॥ ४ ॥ सदेतिशरणमहंप्रपद्ये
स्वाहयायुतम् ॥ श्यामलंकोमलंबालंक्रीडंतंमातुरंकके ॥ ५ ॥ द्विभुजंस्तनपातारंचिंतयेच्छृ
तिधरोभवेत् ॥ लक्षंवाप्रजपेदेनंसमानंलभतेफलं ॥६॥ कामबीजादिमंत्रोऽयंकिन्नसिद्ध्य
तिभूतले ॥ उपसंहृतादिव्यांगंपुरावन्मातुरंकके ॥ ७ ॥ चलदोश्चरणंबालंध्यात्वाब्राह्ममु
हूर्तके ॥ जप्त्वामनुवरौविद्वान्सर्वशास्त्रार्थविद्भवेत् ॥ ८ ॥ सर्ववेदार्थकुशलोज्ञानवान्भव
तिध्रुवं ॥ नंदांगणेपर्यटंतंधूलीनिचयधूसरम् ॥ ९ ॥ प्रदीप्तमणिगणोद्दीप्तंयशोदालोकनो
त्सुकम् ॥ एवंध्यात्वामनुवरंजपेन्नियममास्थितः ॥१०॥ लक्षमेकंजपादस्यकिन्नसिद्ध्यति
भूतले ॥ प्रातःप्रातःपिबेत्तोयमष्टोत्तरशतंजपन् ॥ ११ ॥ अनेनमूकोमुग्धात्माजडःपाषा
णवत्तथा ॥ अनेनजप्यमानेनसाक्षाद्वाक्पतिसंततिः ॥ १२ ॥ पद्भ्यांनिःक्षिप्यशकटंरुदं
तंप्राकृतंयथा ॥ लक्षजाप्यादितिध्यात्वाआपद्भ्योमुच्यतेध्रुवं ॥ १३ ॥ शत्रुभ्योनभयंतस्य
राजतोनापिदस्युतः ॥ नतस्यविद्यतेभीतिःकदाचिदपिसुव्रत ॥ १४ ॥ अथापरंप्रवक्ष्या
मिरहस्यंसुरपूजितम् ॥ यद्दत्वासाधकवरःप्रयोगफलमाप्नुयात् ॥ १५ ॥ ब्रह्माणंसोमसंयु
क्तमनुस्वारविभूषितं ॥ बिंदुनादसमाक्रांतंकल्पराजंसमुद्धरेत् ॥ १६ ॥ पवनंवीतिहोत्र
स्थंमहामायासमन्वितम् ॥ बिंदुनादसमाक्रांतंद्वितीयंबीजमुद्धरेत् ॥ १७ ॥ धरार्णरेफसं

युक्तंचतुर्थस्वरभूषितं ॥ इंदुबिंदुसमायुक्तंनृतीयंबीजमुद्धरेत् ॥ १८ ॥ थांतंशंभुसमायुक्तं इंदुबिंदुसमान्वितं ॥ दौर्गबीजमिदंख्यातंसमस्तापन्निवारणं ॥ १९ ॥ शंभोःपदंवन्हियुतं मायाबिंदुसमान्वितं ॥ अशेषजगतांबीजंमहामायेतिविश्रुतं ॥ २० ॥ अनयायोग्यतोमंत्री असाध्यमपिसाधयेत् ॥ वांतंवन्हिसमायुक्तंचतुर्थस्वरभूषितं ॥ २१ ॥ श्रियोबीजमिदंप्रोक्तंनृणांसर्वसुखप्रदं ॥ विरिंचीन्द्रसमायुक्तंचतुर्थस्वरभूषितं ॥२२॥ नादबिंदुसमाक्रांतंबीजं त्रैलोक्यमोहनं ॥ प्रोक्तंसांताक्षरंतत्तुषष्ठस्वरसमन्वितं ॥ २३ ॥ नादबिंदुसमायुक्तंकूर्चबीजमिदंस्मृतं ॥ एतेषांबीजवर्गाणांज्ञात्वाकर्माणिमंत्रवित् ॥ २४ ॥ गुरुतःशास्त्रतःसम्यक् सर्वकर्माणिसाधयेत् ॥ अन्यथानैवसिद्धिस्स्यान्मंत्रकल्पशतैरपि ॥ २५ ॥ मेरुश्चतुर्दशस्वर वन्हिबिंदुसमान्वितं ॥ नृसिंहबीजमित्युक्तंभूतापस्मारनाशकं ॥ २६ ॥ समाहितमनाभूत्वापद्माक्षैःकृतमालया ॥ अयुतैकंजपेन्मंत्रंब्रह्मचारिव्रतेरतः ॥ २७॥ अल्पायासेनकामाःस्युर्दारिद्रश्चनजायते ॥ सर्वेमनोरथास्तस्यासिध्यंतीतिनसंशयः ॥ २८ ॥ नित्यकर्मरतःकृष्णंवनपुष्पैःसमर्चयेत् ॥ वश्याभवंतिराजानोनसकुर्याद्विचारणाम् ॥ २९ ॥ तमेवरक्तपुष्पैस्तुवैश्यावश्याभवंतिहि ॥ नीलोत्पलैस्तुशूद्राःस्युर्मासंकृष्णंसमर्चयेत् ॥ ३० ॥ जुहुयाद्रक्तकुसुमैर्मिश्रितैस्तिलतंडुलैः ॥ मंत्रेणाष्टसहस्रंतुजप्त्वाभस्मधरेद्यदि ॥३१॥ ललाटेविधृतेत

कुसुमामिश्रतास्तिलतंडुलैः ॥ ... ॥३१॥ ललाटविधृतत


स्यसर्वेवश्याभवंतिहि ॥ अनेनचशरीरेणराजानोवशतामियुः ॥३२॥ स्त्रियोवश्याभवंत्यस्य
पुत्रामात्याश्चसर्वदा ॥ विवाहार्थीजपेन्मंत्रंमासमष्टसहस्रकं ॥ ३३ ॥ रासमंडलमध्यस्थंकृ
ष्णंध्यात्वाव्रतेस्थितः ॥ विवहेदुत्तमांकन्यांरम्यांसर्वकुलोज्ज्वलां ॥३४॥ पुत्रंमेकृष्णरक्षेति
द्विजेनप्रार्थितोहरिः ॥ हृतंपुत्रंसमाहृत्यददौयस्तंविचिंतयेत् ॥३५॥ पुत्रकामोलभेत्पुत्रंमा
सैनैकेनसुंदरं ॥ दीर्घायुमप्रतिहतबलवीर्यसमान्वितं ॥ ३६ ॥ गंधपुष्पैःसमाराध्यकृष्णंध्या
येच्चकन्यका ॥ मासद्वयंतथामंत्रंजपेदष्टसहस्रकं ॥ ३७॥ मनोरथपतिंलब्ध्वादीर्घकालंच
क्रीडति ॥ अंजनंकुसुमंवस्त्रंतांबूलंचंदनंतथा ॥ ३८ ॥ अन्यान्यप्युपभोग्यानिस्पृष्ट्वामंत्र
शतंजपेत् ॥ दीपयेत्तस्ययस्यैवसोचिराद्दासभवेद्दशी ॥ ३९ ॥ स्त्रियोवश्याअनेनैवभवंतिमुनि
सत्तम ॥ पुरुषंवशयेन्नारीअनेनैवविधानतः ॥ ४० ॥ अर्थार्थकामःश्रीपुष्पैःसिततंदुलमि
श्रितैः ॥ अष्टोत्तरसहस्रंतुजुहुयादर्थवान्भवेत् ॥ ४१ ॥ विश्वरूपधरंध्यात्वाशतमष्टोत्तरं
जपेत् ॥ समाहितमनामंत्रीयशस्वीकीर्तिमान्भवेत् ॥४२॥ प्रेतभूतपिशाचैश्चस्कंदादिग्र
हपीडितः ॥ पूतनास्तनपातारंध्यात्वामंत्रशतंजपेत् ॥ ४३ ॥ प्रणश्यंतिग्रहादुष्टापलायंत
इतस्ततः ॥ सर्पमंडलदष्टांश्चमूषकाद्यैश्चदंशितान् ॥ ४४ ॥ कृष्णंकालीयदमनंचिंतयित्वा
जपेन्नरः ॥ तर्जयंतंविषंघोरंहुंकारेणविनाशयेत् ॥ ४५ ॥ तत्राप्यन्यंमनुवरंहुंबीजाद्यंशृ

समिद्भिः पूर्ववद्ध्यात्वामेधास्यादतिमानुषी ॥ वाचमिच्छन्लभेद्वाचंजप्त्वाब्राह्ममुहूर्तके ॥ ७४ ॥ शतंशतंचषण्मासंवाग्मीचातिसुधीर्भवेत् ॥ शत्रूणांजयकामायपारिजातहरंहरिं ॥ ७५॥ गरुडारोहणंध्यात्वाजित्वासर्वदिवौकसाम् ॥ सामिद्भिश्चापिजुहुयात्करवीरसमुद्भवैः ॥ ७६ ॥ लक्षंजप्त्वातथालक्षंजुहुयान्मंत्रवित्तमः ॥ जित्वाशत्रुगणानेतानाक्रांतश्चयथाविधि ॥७७॥ प्रतिष्ठांकारयेद्यस्तुभगवंतंविचिंत्यच ॥ शंखपद्मनिधीयुक्तंवसंतंद्वारकापुरि॥ ७८ ॥ ध्यात्वातिलाज्यचरुणाजुहुयात्सिततंडुलान् ॥ अष्टोत्तरसहस्रंवैप्रतिष्ठांलभतेध्रुवं ॥ ७९ ॥ सर्वान्कामान्वशीकर्तुंकामयन्पंकजासने ॥ कदंबमालयानित्यंभगवंतमलंकृतं ॥ ८० ॥ सनकाद्यैःप्रार्थ्यमानंयोगिभिर्गोपवेषकं ॥ विचित्रपुष्पमालाभिर्भूषितंवनमालया ॥ ८१ ॥ कदंबमूलेगायंतंचिंतयेत्सर्वनायकं ॥ सामिद्भिरप्यपामार्गैरष्टोत्तरसहस्रकं ॥ ८२ ॥ मध्वाज्ययुक्तैर्जुहुयात्सर्वलोकोवशोभवेत् ॥ मुमुक्षुभिर्भगवंतंपुंडरीकदलेक्षणं ॥८३॥ सनकाद्यैश्चिंत्यमानंसिद्धैरन्यैश्चयोगिभिः ॥ ब्रह्मेन्द्रशंकरमुखैर्गणैश्चापिदिवौकसाम् ॥ ८४॥ प्रल्हादप्रमुखैर्भक्तैरन्यैश्चापिमहात्माभिः॥हृत्पद्मकर्णिकोत्तुंगदिव्यसिंहासनोपरि ॥८५॥ ध्यात्वैवपरमात्मानंयशोदानंदवर्द्धनम् ॥ पलाशतुलसीपत्रैःसौवर्णकुसुमैःशुभैः ॥ ८६ ॥ मानसैर्वायथाशक्त्याअर्चयेत्पुरुषोत्तमम् ॥ आत्मानंदेवकीपुत्रंलीलायष्टिधरंस्मरेत् ॥ ८७ ॥ यद्य

थाशक्त्याअर्चयेत्पुरुषोत्तमम् ॥ आत्मानंदेवकीपुत्रलीलायोष्टिधरंस्मरेत् ॥ ८७ ॥ यद्य

त्कामयतेमंत्रीतत्तदाप्नोत्ययत्नतः ॥ अनेनविधिनासर्वंधारयेत्प्रियमात्मनः ॥ ८८ ॥ योयजे
च्चचतुर्थेनविष्णोश्चैवतुबुद्धिमान् ॥ तृतीयेनार्चनंविंद्यात्ब्रह्मणाविष्णुनासह ॥ ८९ ॥
इतिश्रीगौतमीयतन्त्रे नारदप्रोक्ते एकोनविंशतितमोऽध्यायः ॥ १९ ॥ ॥ छ ॥
अथापरान्प्रवक्ष्यामिप्रयोगान्भुविदुर्लभान् ॥ यान्कृत्वामानवःसम्यक्सद्योदेवत्वमृच्छाति
॥ १ ॥ नासाध्यंविद्यतेतस्यस्वर्गेमर्त्येरसातले ॥निशातशरानिर्भिन्नभीष्मतापहरंहारिम् ॥२॥
दृष्ट्यापीयूषवर्षिण्याकारुण्यात्तंविलोकयन् ॥ एवंध्यात्वायुतजपादसाध्यज्वरनाशनं ॥३ ॥
मूर्च्छादाहगदस्फोटविषकीटसमुद्भवं ॥ नाशयेद्दाहमाचिरादमृतादशशतंहुनेत् ॥ ४ ॥ का.
शिराजेनप्रहितांकृत्यांतांद्वारकापुरीं ॥ निजाऽरिणातांछित्वाशुतत्पुरींचक्रतेजसा ॥ ५ ॥ प्र
दहंतंहरिंस्मृत्वाजपेदयुतमादरात् ॥ सुस्नेहाक्तैःसर्षपैश्चहुनेद्रात्रौतथायुतं ॥ ६ ॥ कृत्याप
रेरितास्तंतुनग्रसंतिकदाचन ॥ डाकिनीपूतनाकृत्यापिशाचायक्षराक्षसाः ॥ ७ ॥ अन्यवै
क्रूरसत्वाश्चप्रयोगाज्जपहोमयोः ॥ देशाद्देशांतरंयांतिनसमर्थाश्चहिंसितुं ॥ ८ ॥ ध्यात्वाविश्वे
श्वरंदेवंव्याप्तविश्वावकाशकं ॥ सूर्यकोटिप्रतीकासंचंद्रकोटिसुशीतलं ॥ ९ ॥ एवंध्यात्वा
चमातिमाँल्लक्षमेकंजपेन्मनुं ॥ जुहुयादयुतंभक्त्याशतवीर्यांकुरत्रिकैः ॥ १० ॥ अकालमृत्यु
नाशायसत्यमेतत्परंपदं ॥ मृत्युंजयंहरिंध्यात्वासर्वपापैर्विमुच्यते ॥ ११ ॥ आसीनमाश्र

मेदिन्येबदरीखंडमंडिते ॥ स्पृशन्बृहद्भ्यांहस्ताभ्यांघंटाकर्णकलेवरं ॥१२॥ एवंध्यात्वाजपेन्मासमष्टोत्तरसहस्रकं ॥ समस्ताविपदांमंत्रप्रिशमायशमायच ॥ १३ ॥ समतासर्वभूतेषु आशुनिर्वाणदायिनी ॥ निशथिरेरथमारूढंतर्जयंतंमुहुर्मुहुः ॥ १४ ॥ धावमानंरिपुगणमनुधावंतमच्युतं॥ विसृजद्बाणसंघेननयंतंदूरदेशतः ॥१५॥ उच्चाटनंभवेत्सद्योरिपुणांलक्षजापतः ॥ द्वेषयंतंरुक्मिबलंपांड्यमध्यस्थितंहरिं ॥ १६ ॥ ध्यात्वालक्षंमनुवरंनिंबस्नेहविमिश्रिताम् ॥ तदंतेजुहुयान्मंत्रीगुलिकांगोमयद्भवां ॥१७॥ एवंप्रयोगमात्रेणवैरस्यंजायतेमिथः॥ अन्योन्यकलहेनैवदेशाद्देशांतरंव्रजेत् ॥ १८ ॥ विद्विष्टस्तत्रतत्रापिकाकवत्पर्यटन्महीं ॥ पार्थेदिशंतंगीतार्थंरथस्थंमधुसूदनम् ॥ १९ ॥ राजमंडलमध्यस्थंसूर्यचंद्रायुतप्रभम् ॥ ध्यात्वायुतंमनुवरंशमायप्रजपेत्सुधीः ॥२०॥ अनेनजपमात्रेणकिन्नसिद्ध्यतिभूतले ॥ "स्थाने हृषीकेशतवे"त्यादिसूक्तंवाचार्जुनर्षिकं ॥ गायत्रीछंदोवालितंविश्वात्माकृष्णदैवतं॥२१॥सपर्यापूर्ववत्प्रोक्तासाधयेत्सकलेप्सितं ॥ श्रीबीजाद्यैर्जपेन्मंत्रंवरौध्यात्वाचपूर्ववत् ॥ २२ ॥ लक्षैकजपमात्रेणकुबेरइवमोदते ॥ अन्नदैवतगोपालंवक्ष्येऽन्यंश्रृणुतत्वतः ॥२३॥ अन्नरूपं रसरूपंतुष्टिरूपंपदोपरि ॥ अन्नाधिपतयेस्वाहासोऽयमन्नाधिपोमनुः ॥ २४॥ श्रीबीजाद्यो मनुःप्रोक्तोऽप्यन्नरत्नसमृद्धिदः ॥ आचक्राद्यंगक्लृप्तिःस्यान्नारदोऽस्यमुनिःस्मृतः ॥२५॥ गा

मनुःप्रोक्तोऽप्यन्नरत्नसमृद्धिदः ॥ आचक्राधंगर्भातिःस्यान्नारदोऽस्यमुनिःस्मृतः ॥२५॥ गा



यत्रीछंदइत्युक्तंदेवोऽन्नस्यप्रदोहरिः ॥ ध्यानार्चनादिकंसर्वमस्यपूर्ववदाचरेत् ॥ २६ ॥ एवं
संपूजयेन्मंत्रीसितुसर्वसम्रद्धिमान् ॥ आल्हत्यस्वर्णपात्रंचक्षालितंशुद्धवारिणा ॥ २७ ॥ वि
लिप्यगंधपंकेनलिखेदष्टदलांबुजं ॥ कर्णिकायांलिखेद्द्न्हेःपुटितंमंडलद्द्यं ॥ २८ ॥तन्म
ध्येविलिखेत्कामंसाध्याख्यकर्मसंयुतं ॥ ततःशिष्टैर्मनोवर्णैस्तत्कामंवेष्टयेत्सुधीः ॥ २९ ॥
श्रियंषट्कोणकोणानामैंद्रनैऋतवायुषु ॥ आलिख्यचालिखेन्मायांवन्हिवारुणशूलिषु॥३०॥
अक्षरैःकामगायत्र्यावेष्टयेत्केशरेषुच ॥ मारमालामनोवर्णैर्दलेष्वष्टसुमन्त्रावित् ॥३१॥ लिखे
द्गृहान्तरेवर्णैर्मातृकांतद्बहिर्लिखेत् ॥ भूबिंबंचलिखेद्बाह्येश्रीमायेदिग्विदिक्ष्वपि ॥ ३२ ॥
यंत्रमेवंसमालिख्यजातरूपमयेपटे ॥ राजतेताम्रपात्रवाभूर्जेक्षौममयेऽपिवा ॥३३॥ सूक्ष्म
तंतुमयेवापिप्रतिष्ठाप्यसमीरिणं ॥ आकर्षणंसुरस्त्रीणांनागलोकसुवासिनां ॥ ३४ ॥ पिशा
चयक्षरक्षांसितथाक्रूरग्रहाश्वये ॥ दुष्टसत्वाश्वयेसर्वेपरिसर्पंतिभूतले ॥ ३५ ॥ यंत्रराजधरं
दृष्ट्वाविद्रवंतिव्रजंतिच ॥ बहुनाकिमिहोक्तेनसर्वलोकसुखावहं ॥ ३६ ॥ स्त्रीणामाकर्षणं
राज्ञांलोकवश्यकरंभुवि ॥ योगसिद्धिकरंतावद्भवसागरतारकं ॥ ३७ ॥ भुक्तिमुक्तिकरंयं
त्रमितिप्रोक्तंस्वयंभुवा ॥ वांतयांतसमारूढंमायाबिंदुविभूषितं ॥ ३८ ॥ श्रियोबीजमिति
प्रोक्तंनृणांसद्यःसुखप्रदं ॥ आदौक्लींकारमुक्त्वाचकामदेवपदंततः ॥ ३९ ॥ चतुर्थ्यतंवि

ग्रहेचपुष्पबाणायतत्परं ॥ धीमहीतिपदंप्रोक्तंतन्नोऽनंगःप्रचोदयात् ॥ ४०॥ एषामन्मथगा यत्रीप्रोक्तामन्मथदीपिनी ॥ कामंरतिंचसंभाष्यततः कामपदंवदेत् ॥ ४१ ॥ देवायेतिपदं ब्रूयात्तथासर्वपदंततः ॥ प्रियायेतिपदांतेचवदेत्सर्वजनंपुनः ॥ ४२ ॥ ब्रूयात्संमोहनायेति ज्वलशब्दंचवीप्सयेत् ॥ प्रज्वलेतिपदंसर्वजनस्यहृदयंतथा ॥ ४३ ॥ उक्त्वाममवशंपश्चा त्कुरुशब्दंचवीप्सयेत् ॥ वन्हिजायांतथेत्युक्तामालाख्योमन्मथोमनुः ॥ ४४ ॥ भूगृहं चतुरस्रंस्यादृष्टवज्रयुतंमुने ॥ अस्मिन्मंत्रेसमाराध्यवासुदेवंजगद्गुरुम् ॥ ४५ ॥ किन्नसि द्ध्यातिमंत्रज्ञोऽप्यकथ्यंकथितंचते ॥ एवंतेकथितंयंत्रंप्रयोगांतरमुच्यते॥ ४६॥ लक्षंजप्त्वा पलाशानांकुसुमैस्तत्समंहुनेत् ॥ व्याख्यातासर्वशास्त्राणामचिरादेवजायते ॥ ४७ ॥ स योगीसत्यविज्ञानीविष्णुयोगीतथात्मवित् ॥ शुक्लादिवस्त्रलाभायशुक्लादिपुष्पमाहरेत् ॥४८॥ अष्टोत्तरशतंजप्त्वाराजतोवान्यतोलभेत् ॥ मुंचंतंपितरौकृष्णंमथुरानिगडार्दितौ ॥ ४९ ॥ ध्यात्वायुतंजपांतेचतावत्संख्यंचहोमयेत् ॥ निगडान्मुच्यतेसद्योयमुद्दिश्यकृताक्रिया ॥५०॥ पुरंदरमुखैर्देवैःस्थितंवृंदावनेहरिं ॥ सुरभ्याःपयसातोयैरभिषिच्यचसंस्तुतं ॥ ५१ ॥ राज राजेश्वरंकृत्वामंगलाचारपूर्वकं ॥ उर्वशीप्रमुखाभिस्तुस्वर्गवेश्याभिरावृतम् ॥ ५२ ॥ एवं ध्यात्वाजपेल्लक्षंपंकजैरयुतंहुनेत् ॥ सार्वभौमोभवेत्सोऽपियेनेयंविहिताक्रिया ॥५३॥ आत्मा

ध्यात्वाजपेल्लक्षंपंकजैरयुतंहुनेत् ॥ सार्वभौमोभवेत्सोऽपियमेधाविहिताक्रिया ॥५३॥ आत्मा

नंकंसमथनंरिपुंकंसात्मकंस्मरेत् ॥ निशीथेप्रजपेन्मंत्रीदक्षिणामुखसंस्थितः ॥ ५४ ॥ लक्ष
मेकंजपांतेतुवानीरतरुपत्रकैः ॥ अयुतंहोममात्रेणम्रियेताऽरिर्नचान्यथा ॥ ५५ ॥ अरिष्टप
त्रलक्षंतत्पादपांशुजलोक्षितं ॥ जुहुयान्म्रियतेशत्रुः शंकरेणापिरक्षितः ॥ ५६ ॥ अरिष्टदल
कार्पासव्योषास्थिकरसंयुतं ॥ हवनाल्लक्षमात्रेणयदिदूरस्थितोभवेत् ॥ ५७ ॥ अपिपीयूषसं
सेवीम्रियतेऽरिर्नचान्यथा ॥ हरिद्राग्रंथिहोमेनस्तंभयेदरिवाहिनीं ॥ ५८ ॥ नशस्तंमारणंक
र्मकदाचिद्वैष्णवेमनौ ॥ क्रूरंकष्टाशयंकष्टदायिनंचसतामपि ॥ ५९ ॥ ईदृग्विधंजनंप्राप्य
अभिचाराययोजयेत् ॥ प्रायश्चित्तायगायत्रीलक्षंजप्त्वाचसाधकः ॥ ६० ॥ तदंतेपायसैर्म
त्रीअयुतंहोममाचरेत् ॥ अभिप्रयोगकर्तॄणांशांतिःस्यान्नैवचान्यथा ॥ ६१ ॥ इतिश्रीगौत
मीयतन्त्रे विंशतितमोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ छ ॥
श्रीनारदउवाच॥ कर्मांतरमथोवक्ष्येश्रृणुष्वावहितोऽनघ॥ यत्कृत्वामंदभाग्योऽपिलभेन्मंत्रफ
लानिवै ॥ १ ॥ प्रणवद्वयमध्यस्थंजपेदयुतसंख्यया ॥ त्रिरात्रजपमात्रेणबृहस्पतिसमोभवेत्
॥२॥व्याख्यातासर्वशास्त्राणांवेदानामपिजायते ॥ रविवारेऽश्वत्थमूलेमासाद्यष्टोत्तरंशतं॥३॥
भूयोभूयोभवेच्छक्तिर्जीवेदष्टोत्तरंशतं ॥ तस्यशांतिर्भवेन्नित्यंयमुद्दिश्यकृताक्रिया ॥ ४ ॥ अं
शुकैरर्चयेत्कृष्णंमासमात्रंतुनिर्मलैः ॥ मुच्यतेमलिनैःकृच्छ्रैःपापैर्घोरतरैरपि ॥ ५ ॥ पट्टव

स्तैर्यजेद्भक्त्यासंपत्तिमतुलांलभेत् ॥ विद्रुमैःपूजयेत्कृष्णंत्रैलोक्यंवशमानयेत् ॥ ६ ॥ माणिक्यैःपूजयेद्भक्त्यासार्वभौमसमोभवेत् ॥ पद्मरागैर्यजन्कृष्णंराजाभवतिनिश्चितं ॥ ७ ॥ क्षत्रियःसार्वभौमःस्यात्साधयेद्यःसमाहितः ॥ गारुत्मतमयैरत्नैःपूजयन्ज्ञानवान्भवेत्॥८॥ अपिहीरकरत्नेनपूजयन्किंनसाधयेत् ॥ सुवर्णपुष्पैरभ्यर्च्यमासंभक्तिपरायणः ॥ ९ ॥ कुबेरसमसंपत्तिंसंप्राप्यमोदतेचिरात् ॥ देहांतेहरितांप्राप्यनिर्वाणपदमृच्छति ॥ १० ॥ रविवारेऽरुणांभोजैःकल्हारैःसोमवासरे ॥ मङ्गलेरक्तपुष्पैश्चबुधेतगरसंभवैः ॥ ११ ॥ चम्पकैर्गुरुवारेचशुक्रेकुंदसमुद्भवैः ॥ शनिवारेशमीपुष्पैःपूजयेद्भक्तितोयतिः ॥ १२ ॥ रविवारेघृतान्नंतुपयोभक्तंनिवेदयेत् ॥ सोमवारेपिष्टकानिसितयासहयोजयेत् ॥ १३ ॥ मंगलेगुडसंमिश्रमन्नंबहुगुणान्वितं ॥ बुधवारेयावकैश्चगुरौपूपसमुद्भवैः ॥ १४ ॥ मुद्गान्नंशुक्रवारेच शनौसघृतपायसं ॥ वैशाखेमासिविधिवत्तर्पयेद्धिमलैर्जलैः ॥ १५ ॥ ज्येष्ठेमासिप्रयत्नेन फलैःसंपूजयेद्धरिं ॥ आषाढेमासिविधिवत्पवित्रैःपूजयेद्धरिं ॥ १६ ॥ एकैकंस्वर्णसूत्राणि ग्रंथियुक्तानिकारयेत् ॥ अथवापट्टसूत्राणिपद्मसूत्राणिवापुनः ॥ १७ ॥ पूजांतेदेवदेवाय महर्षिभ्योनिवेदयेत् ॥ मिथुनेभ्यस्तथादत्वामहांतमुत्सवंचरेत् ॥ १८ ॥ तोषयेद्भक्ष्यभोज्याद्यैर्ब्राह्मणान्शंसितव्रतान् ॥ एवंसंवत्सरंमंत्रीकृत्वाभीष्टमवाप्नुयात् ॥१९ ॥ नचेद्हर्षकृता

यैर्ब्राह्मणानृशंसितव्रतान् ॥ एवंसंवत्सरंभक्त्याकृत्वाभीष्टमवाप्नुयात् ॥१९॥ नचेद्वर्षकृता

पूजावार्स्ताभेक्षायकल्पते ॥ श्रावणेमासिकृष्णंतंपुष्पैःकेतकिसंभवैः ॥ २० ॥ चंद्रचंदन कस्तूरीकुंकुमादिसुवासितैः ॥ एलालवंगकंकोलफलानिबहुधार्पयेत् ॥२१॥ भाद्रेमासिय जेद्विष्णुंभक्ष्यैर्बहुगुणान्वितैः ॥ इषेमासियजेद्भक्त्याभक्ष्यैर्भोज्यैश्चविस्तरैः ॥२२॥ कार्पास निर्मितैर्वस्त्रैर्नानाभरणसंयुतैः ॥ तुलास्थेभास्करेकृष्णंपूजयेन्मासमात्रकं ॥ २३ ॥ रात्रौप्र दीपैर्होमैस्तुदुग्धपिष्टादिसंयुतैः ॥ घृतदीपमवाच्छिन्नंदद्यान्मासंमहोज्ज्वलं ॥ २४ ॥ एकाद श्यासुपौष्यैवद्वादश्यांपारणादिने ॥ शुक्लायांविष्णुमभ्यर्च्यवस्त्रालंकारभूषणैः ॥ २५ ॥ अ स्यांतिथौतुमतिमान्वार्षिकोत्सवमाचरेत् ॥ भोज्यानिबहुभक्ष्याणिब्राह्मणेभ्योनिवेदयेत् ॥ २६ ॥ एवंकृतेदेवतास्यतुष्टाचेष्टंप्रयच्छति ॥ सत्यलोकमवाप्नोतिपुनरावृत्तिवर्जितं ॥२७॥ मार्गशीर्षेयजेद्देवंनवान्नैर्व्यंजनैःशुभैः ॥ नारिकेलफलक्षीरमिश्रितंगुडजीरकैः ॥२८॥ सुपक्वंदेवदेवायभक्त्यातस्मैनिवेदयेत् ॥ पौष्येमासिचमाषंवैघृतापूपैःप्रपूजयेत् ॥२९॥ ग्र हदोषंनिवृत्त्याशुभूयान्नृपतिसन्निभः ॥ माघेमासियजेत्कृष्णंअक्षतैःसुशुभैःसितैः ॥ ३० ॥ दुग्धान्नंशर्करायुक्तंमिष्टान्नंचनिवेदयेत् ॥ अस्मिन्मासिशुभेकालेवस्त्रेणाच्छादयेद्विभुं ॥३१॥ फाल्गुनेदेवकीपुत्रंपूजयेत्स्वर्णचंपकैः ॥ चूतसौगंधकुसुमैर्धूपैर्गंधसमान्वितैः ॥ ३२ ॥ चै त्रेमासिवासुदेवंसर्वपुष्पैःसमर्चयेत् ॥ पौर्णिमायांजपेद्भक्त्यादमनैश्चसगुच्छकैः ॥ ३३ ॥

अस्मिन्दिनेरार्तिकामंपूजयेद्भक्तितत्परः ॥ ३४॥ नचेत्सांवत्सरीपूजाव्यथाभवातीनिश्चितं ॥ भस्मीभूतंस्मरंदृष्ट्वारुदितासारतिःसती ॥ ३५॥ तांदृष्ट्वाकृपयाविष्टोवरंदातुंस्वयंशिवः ॥ प्रत्युवाचपातिंत्वंहिसुभगत्वमवाप्नुहि ॥ ३६ ॥ सुंदरीसर्वलोकेषुक्रीडार्थंव्रजसुंदरि ॥ ततोऽश्वक्रंदनजलात्पुष्पंदमनकंशुभं ॥ ३७ ॥ तेनपूजनमात्रेणसंवत्सरफलंभवेत् ॥ होमयेल्लक्षमात्रंयःपिष्टकैर्घृतभार्जितैः ॥ ३८ ॥ तावत्संख्यंमनुंजप्त्वाकृष्णंपश्यतिमंत्रवित् ॥ इतितेकथितंसम्यक्पूजनंवर्षिकोद्भवैः ॥ ३९ ॥ कृत्वानेनविधानेनकिन्नसिद्ध्यतिभूतले ॥ पुण्यस्त्रियोगृहस्थाश्वमुनयोब्रह्मचारिणः ॥ ४० ॥ वनस्थाश्वतथाकृत्वावांछितार्थमवाप्नुयुः ॥ स्त्रियःशूद्राश्वविधिवत्कृत्वातत्फलमाप्नुयुः ॥ ४१ ॥ इहभुक्त्वावरान्भोगान्नभूयोभवसंभवः ॥ एवंकृष्णंयजन्भक्त्यायत्कृतंकोटिजन्माभिः ॥ ४२ ॥ सतुपापैर्नलिप्येतपद्मपत्रमिवांभसा ॥ इतिश्रीगौतमीयतंत्रे एकाविंशातितमोऽध्यायः ॥ २१ ॥ ॥ छ ॥

गौतम उवाच॥विस्तरेणमहाब्रह्मन्कृष्णमंत्रान्ब्रवीहिच॥भक्तोऽहंतवशिष्योऽहंयोग्योऽस्मिश्रवणेगुरो ॥ १ ॥ नारद उवाच ॥ श्रृणुब्रह्मन्कृष्णमंत्रान्सर्ववेदैकसम्मतान् ॥ यदेकज्ञानमात्रेणपुनर्जन्मनविद्यते ॥ २ ॥ प्रणवंपूर्वमुद्धृत्यनमस्तदनुउच्चरेत् ॥ कौस्तुमान्हायसंप्रोक्तोमनुरष्टाक्षरःपरः ॥ ३ ॥ एतद्विज्ञानमात्रेणसाक्षाद्विष्णुर्भवेद्यतिः ॥ षट्दीर्घस्वरसं

संप्रोक्तोमनुरष्टाक्षरःपरः ॥ ३ ॥ एतद्विज्ञानमात्रेणसाक्षाद्विष्णुर्भवेद्यतिः ॥ षट्दीर्घस्वरसं

भेद्यकामेनांगक्रियामता ॥ ४ ॥ कलापकुसुमश्यामंशंखचक्रगदांबुजम् ॥ अनेकरत्नसंछि
न्नंकौस्तुभोद्भासिवक्षसं ॥५॥ तालहारावलीरम्यंगरुडोपरिसंस्थितम् ॥ ध्यात्वैवंपरमात्मानं
दशलक्षंजपेन्मनुम् ॥ ६ ॥ होमयेत्तद्दशांशेनसाधितैर्घृतपायसैः ॥ पुरश्चरणमंगंयच्छेषमन्य
त्समापयेत् ॥ ७ ॥ यएवंभजतेमंत्रीभोगमोक्षैककारणं ॥ करप्रचेयासर्वार्थाअंतेचपरमं
व्रजेत् ॥ ८ ॥ दशाक्षरसमानंहिपूजनंसमुदीरितं ॥ अथान्यत्संप्रवक्ष्यामिषडर्णमंत्रनायकं
॥ ९ ॥ यस्यविज्ञानमात्रेणजीवन्मुक्तोमहींचरेत् ॥ त्रिमात्रंनमसायुक्तंचतुर्थ्याकृष्णइत्यपि
॥१०॥षडक्षरोमनुःप्रोक्तोदृष्टादृष्टफलप्रदः॥नारदोऽस्यमुनिःप्रोक्तोगायत्रीछंद उच्यते॥११॥
श्रीकृष्णोदेवतासाक्षात्दुर्गाधिष्ठातृदेवता ॥ त्रिमात्रंबीजमित्युक्तंनमःशक्तिरुदाहृता॥१२॥
कृष्णायकीलकंचास्यमंत्रराजस्यकीर्तितं॥ विनियोगोऽस्यमंत्रस्यपुरुषार्थचतुष्टये॥१३॥पंचा
गानिमनोरस्यआचक्राद्यैरुदीर्यते ॥ नीलजीमुतसंकाशांकिंकिणीजालमालिनं ॥१४॥ सर्वाभ
रणसंदीप्तंरक्तपद्मोपरिस्थितं ॥ सनकाद्यैर्मुनिवरैःस्तुतंध्यायेन्मनुंवरम् ॥१५॥ आलोलकुंत
लोद्भासिमुखचंद्रविराजितम् ॥ शशरक्ताऽधरोष्ठश्चपाणिपादविराजितम् ॥ १६ ॥ करा
भ्यांपायसंश्लक्ष्णंसद्योहैय्यंगवीनकम् ॥ दधंतंचिंतयेद्देवंभोगमोक्षफलप्रदम् ॥ १७ ॥ ध्या
त्वैवंपरमात्मानंदशलक्षंजपेन्मनुम् ॥ जपांतेपायसैःशुद्धैर्होमंकुर्यात्सशर्करैः ॥१८॥ तर्पयेत्तद्द

शांशेनजलैःकर्पूरवासितैः ॥ अभिषेकंदशांशेनदशांशैर्विप्रभोजनं ॥ १९ ॥ तदंतेदक्षिणांद त्वासाधयेद्दित्तमात्मनः ॥ भिक्षाहारोजपेन्मंत्रंवर्षमेकंव्रतेस्थितः ॥२०॥ कविर्वाग्मीसमृ द्धश्वसर्वज्ञोजायतेध्रुवं ॥ नवनीताशनंदेवंध्यात्वालक्षंजपेत्सुधीः ॥ २१ ॥ दिव्यज्ञानम वाप्नोतित्रिलोकींप्राप्यमोदते ॥ यएवंमंत्रराजंतुभजतेभक्तितत्परः ॥ २२ ॥ इहभुक्त्वा वरान्भोगान्देहांतेपरमंविशेत् ॥ अथापरंप्रवक्ष्यामिषोडशार्णमहामनुं ॥ २३ ॥ यस्य विज्ञानमात्रेणकृष्णात्मापरमांविशेत् ॥ प्रणवंनमसायुक्तंकृष्णगोविंदकौतथा ॥ २४ ॥ श्रीपूर्वौङेंताउच्चार्य्यहुंफट्स्वाहेतिकीर्तितः ॥ नारदोऽस्यमुनिःप्रोक्तश्छंदोऽनुष्टुबुदाहृतं ॥ २५॥परमात्माहविर्देवोभुक्तिमुक्तिफलप्रदः॥दशोर्णकवदेवास्यजपहोमौप्रकीर्तितौ ॥२६॥ प्रयोगस्तत्समःप्रोक्तोबीजंशक्तिश्वतत्समे ॥ यएवंप्रजपेन्मंत्रंसोऽधीतेश्रुतिचतुष्टयं ॥ २७॥ अनेनसदृशोमंत्रोजगत्स्वपिनविद्यते ॥ अनेनराधितःकृष्णःप्रसीदत्येवतत्क्षणात् ॥ २८ ॥ अथसंतानासिद्ध्यैचवक्ष्येऽहंमंत्रनायकं ॥ यस्यविज्ञानमात्रेणसर्वेसिद्ध्यंतिमंत्रिणः ॥२९॥ देवकीपुत्रशब्दांतेगोविंदपदमीरयेत् ॥ वासुदेवपदांतेतुततोब्रूयाज्जगद्गुरो ॥ ३० ॥ देहिमे तनयंदेवत्वामहंपदमीरयेत् ॥ शरणंगतइत्युक्तोमंत्रश्चानुष्टुबव्ययः ॥ ३१ ॥ नारदोऽस्य ऋषिश्छंदोगायत्रंकथितंबुधैः ॥ संतानदोहरिःसाक्षाद्देवताचप्रकीर्तितः ॥ ३२ ॥ व्यस्तैः

ऋषिश्छंदोगायत्रंकथितंबुधैः ॥ संतानदोहरिःसाक्षाद्देवताचप्रकीर्तितः ॥ ३२ ॥ व्यस्तैः

समस्तैरंगानिकृत्वादेवंविचिंतयेत् ॥ निलोत्पलदलश्यामंपीतांबरयुगावृतम् ॥ ३३ ॥
चतुर्भुजंशंखचक्रमूर्ध्वपाणिद्वयेधृतम् ॥ अधःपाणिद्वयेवेणुंवादयंतंमुदान्वितं ॥ ३४ ॥
अनेकरत्नसंनद्धकिरीटोज्ज्वलविग्रहम् ॥ नानालंकारसुभगंगरुडोपरिसंस्थितम् ॥ ३५ ॥
वेदस्तोत्रपरैर्नित्यंमुनिभिःपरिवेष्टितम् ॥ एवंध्यात्वार्चयेत्कृष्णंपंचांगैःप्रथमावृतिः ॥ ३६ ॥
इंद्रादिभिर्द्वितीयास्यात्तृतीयातुतदायुधैः ॥ एवमभ्यर्च्यदेवेशंलक्षमात्रंजपेन्मनुं ॥३७॥ पुत्रं
पौत्रंलभेच्चेहदेहांतेपरमंव्रजेत् ॥ पुत्रजीवेंधनचितेतत्फलैरयुतंहुनेत् ॥ ३८ ॥ अनंतरंदशा
शेनतर्पणादिनिचाचरेत् ॥ यएनंप्रभजेन्मंत्रीसंतानाख्यंमहामनुं ॥ ३९ ॥ अविच्छिन्नो
भवेद्वंशोयावदाभूतसंप्लवः ॥ दशम्यांशुक्लपक्षेतुनिशीथेस्वस्तिमंडले ॥ ४० ॥ हरिमावाह्य
विधिवत्पूजयेदुपचारकैः ॥ एवमर्चनमात्रेणवत्सरात्पुत्रवान्गृही ॥ ४१ ॥ दीर्घमायुरप्र
तिहतबलवीर्यसमन्वितं ॥ वत्सराल्लभतेपुत्रंसत्यंसत्यंमयोदितं ॥ ४२ ॥ यस्यार्थेकुरुतेमं
त्रीप्रयोगात्सतुपुत्रवान् ॥ वंध्यापिलभतेपुत्रान्शतहायनजीवितान् ॥ ४३ ॥ प्रातर्वाचं
यमानारीबोधीद्रुमदलेजलं ॥ मंत्रयित्वाष्टोत्तरशतंपिबेत्पुत्रीयतिध्रुवं ॥ ४४ ॥ एवंप्रयोगा
न्मासमात्रात्तनयंलभतेध्रुवं ॥ अनेनमंत्रितंत्वाज्यंपुत्रसिद्धिकरंपरं ॥ ४५ ॥ अनेनजलपा
नेनवंध्यावर्षाल्लभेत्प्रजां ॥ ४६ ॥ इति श्रीगौतमीयतन्त्रे द्वाविंशोऽध्यायः ॥ २२ ॥

गोतमउवाच ॥ सर्वज्ञानासित्वंविद्वान्स्वयंभूसदृशःप्रभो ॥ त्वदुदीरितमाकर्ण्यकृतार्थोऽहंन चान्यथा ॥ १ ॥ तपस्तप्त्वापुराब्रह्मन्प्रार्थितोहरिरीश्वरः ॥ तेनैवोक्तंनचेदेवंकथितन्यमखंडितं ॥ २ ॥ तदारभ्यसदाब्रह्मन्तवदर्शनलालसः ॥ गंगाप्रवाहणंमंत्रंश्रोतुमिच्छामितत्वतः ॥ ३ ॥ श्रवणेयदियोग्योऽस्मिकृपयाकथयप्रभो ॥ ४ ॥ नारदउवाच ॥ बहवःकथितामंत्रामयातेमुनिसत्तम ॥ तंमंत्रंकथयाम्यद्ययेनज्ञानंप्रसीदाति ॥ ५ ॥ यस्यविज्ञानमात्रेणभक्तिःस्यात्प्रेमलक्षणा ॥ चतुर्विधंतुपांडित्यंज्ञानमात्रेणसिद्ध्यति ॥ ६ ॥ मंदभाग्योदरिद्रोऽपिशठोमूढोऽपिपातकी ॥ उपास्यमंत्रराजंतुवागीशसमतांव्रजेत् ॥ ७ ॥ मयाप्येवंपुरापृष्टःपद्मयोनिर्यथावदत् ॥ तथातेकथयिष्यामिगुह्याद्गुह्यंपरंमुने ॥ ८ ॥ द्वाविंशत्यक्षरोमंत्रोवागीशत्वप्रवर्तकः ॥ सर्वतंत्रेषुगुह्योऽयंगोपनीयश्चगौतम ॥ ९ ॥ वेदःप्रादुरभूदास्येमंत्रेणानेनवेधसः ॥ कवींद्रत्वंभार्गवश्चवागीशत्वंबृहस्पतिः ॥ १० ॥ श्रियमिंद्रादयोदेवाज्ञानंचसनकादयः ॥ सौभाग्यंचद्रमाप्रापकुबेरोऽपिधनेशतां ॥ ११ ॥ इमंमंत्रवरंजप्त्वासर्वज्ञोभवतिध्रुवं ॥ अदृष्टाश्रुतशास्त्रस्यव्याख्याताशिल्पगोभवत् ॥ १२ ॥ महाकविर्महाप्राज्ञोवाक्पतेःसमतांव्रजेत् ॥ ज्ञानंतुपरमंलब्ध्वाविष्णोःसायुज्यतांलभेत् ॥ १३ ॥ यंयंकाममभिध्यायन्मनुष्योभजतेमनुं ॥ तंतंकाममवाप्नोतिभुविस्वर्गेरसातले ॥ १४ ॥ तस्योद्धारमहंवक्ष्येममसार्वज्ञकारणम् ॥

॥ ततंकाममवाप्नोतिभुविस्वर्गरसातले ॥ १४ ॥ तस्योद्धारमहंवक्ष्येममसार्वज्ञकारणम् ॥

कृष्णगोविंदकौङेंतौतथागोपीजनंततः ॥ १५ ॥ वल्लभायप्रियावन्हेश्चन्द्रसर्गीमनुस्वरः ॥ नाम्नामादौक्रमात्कामममायालक्ष्मीर्नियोजयेत् ॥ १६ ॥ द्वाविंशत्यक्षरोमंत्रोवाग्भवाद्यःप्रकीर्तितः ॥ अहमस्यमुनिश्छन्दोगायत्रीदेवतामनोः ॥ १७ ॥ गंगाप्रवाहणःकृष्णःसर्वदेवनमस्कृतः ॥ गंगाप्रवाहवद्वाणीजायतेतेनतत्तथा ॥ १८ ॥ गंगाप्रवाहणोनामकीर्त्यतेपरमार्थतः ॥ बीजंतुमान्मथंप्रोक्तंशक्तिःपत्नीहविर्भुजः ॥ १९ ॥ कृष्णायकामबीजाद्यंत्वद्दयंपरिकीर्तितं ॥ गोविंदायशिरस्तद्दन्मायोद्योच्चारणेनच ॥ २० ॥ गोपीजनशिखांतद्वच्छ्रीबीजाद्येनविन्यसेत् ॥ वल्लभायेतिकवचंअस्त्रजायाहविर्भुजः ॥ २१ ॥ शेषबीजेनसहिताः पंचागमनवःस्मृताः ॥ मूर्ध्निलाभेभ्रुवोर्मध्येनेत्रेकर्णेतथानासि ॥ २२ ॥ आस्येकंठेचदोर्मूले हृदयोदरनाभिषु ॥ लिंगमूलेतथाधारेऊर्वोर्जान्वोश्चगुल्फयोः ॥ २३ ॥ समस्तेनतुमंत्रेण व्यापकंन्यस्यचिंतयेत् ॥ कलापकुसुमश्यामंपूर्णचंद्रनिभाननं ॥ २४ ॥ बर्हिबर्हकृतोत्तंसं वनमालिनमीश्वरं ॥ किरीटहारकेयूररत्नमंडलमंडितं ॥ २५ ॥ श्रीवत्सवक्षसंभ्राजत्कौस्तुभोद्भासितोरसं ॥ युवतीवेषलावण्यरमणीयतनुंहरिं ॥ २६ ॥ दिंव्यपीतांबरधरंतारहारविभूषितम् ॥ स्मेरारुणाधरन्यस्तवेणुंत्रैलोक्यमोहनं ॥ २७ ॥ सर्ववेदमयंवेणुवादयंतंचतुर्भु

१ वल्लभोऽग्निप्रियासर्वसर्गीपूर्वमनुस्वरः ॥ वल्लभोऽग्निप्रियासर्गीहपूर्वसमनुस्वरः ॥ इति पाठांतरे

जम् ॥ स्फाटिकीमक्षमालाचविद्यामूर्ध्वकरद्वये ॥ २८ ॥ दधंतंपुंडरीकाक्षंदिव्यगानपरायणं ॥ अनुल्यानल्पसौंदर्यैर्मोहयंतंजगत्त्रयम् ॥ २९ ॥ तपनीयलसत्कांत्यावीणाकमलहस्तया ॥ निरीक्ष्यमाणचरणंवामपार्श्वस्थयाश्रिया ॥ ३० ॥ हेमासिंहासनेरम्येसर्वरत्नोपशोभिते ॥ रुक्मिण्यादिमाहिषीभिर्निरंतरनिषेवितं ॥ ३१ ॥ चंद्रमंडलसंकाशंश्वेतछत्रोपशोभितं ॥ नारदाद्यैर्मुनिगणैर्ज्ञानार्थिभिरुपासितं ॥ ३२ ॥ इंद्रादिदेवतावृंदैःप्रणतंपरमेश्वरं ॥ सर्वज्ञंजगदीशानंध्यात्वाहृदयपंकजे ॥ ३३ ॥ जपेदेवंमनुवरंध्यात्वालक्षचतुष्टयं॥ आरक्तकुसुमैर्ब्रह्मवृक्षजैर्होममाचरेत् ॥ ३४ ॥ दशांशकेनमंत्रोऽयंसिद्धोभवतिनान्यथा ॥ पूजादशाक्षरेपीठेअंगावृत्तिरनंतरं ॥ महिषीभिर्द्वितीयास्यात्तृतीयादिगधीश्वरैः ॥ चतुर्थींतत्प्रहरणैश्चतुरावृत्तिरीरिताः ॥ ३६ ॥ प्रातःप्रातःपिबेत्तोयंमंत्रेणानेनमंत्रितं ॥ वागीश्वरसमोभूत्वाकाव्यकर्तामहान्भवेत् ॥ ३७ ॥ अनेनमंत्रितंनित्यंब्राह्मीपत्रंप्रभक्षयेत् ॥ मंडलादेवमतिमान्महाश्रुतिधरोभवेत् ॥ ३८ ॥ ब्राह्मीकुष्ठवचाकल्पंघृतेनद्विगुणेनच ॥ चतुर्गुणंभवेद्दुग्धंपाचितंघृतमुत्तमं ॥ ३९ ॥ अवतार्यजपेदेनमयुतंमंत्रमादरात् ॥ कर्षमात्रंप्रातरेवभक्षयेन्मौनमास्थितः ॥ ४० ॥ एतद्भक्षणमात्रेणबृहस्पतिसमोभवेत् ॥ हस्तमारोप्यजिव्हायांजपेदयुतमादरात् ॥ ४१ ॥ प्रातिभाजायतेदिव्यासर्वलोकैकभाविता ॥ धवले

प्यजिन्हायांजपेदयुतमादरात् ॥ ४१ ॥ प्रतिभाजायतेदिव्यासर्वलोकैकभाविता ॥ धवले

रुपचारैस्तुयादिदेवंप्रपूजयेत् ॥ ४२ ॥ दिव्यज्ञानमवाप्नोतिप्रतिभाविश्वजित्वरी ॥ श्रीबी
जाद्यंयदाजाप्यंतदालक्ष्मीरचंचला ॥ ४३॥ कामाद्यजपनादेवसर्वलोकंवशंनयेत् ॥ वागा
दिजपनादेववाक्सिद्धिर्जायतेऽचिरात् ॥ ४४ ॥ शक्तिबीजादिकोमंत्रोनिर्वाणमचिराद्दि
शेत् ॥ पुटनात्प्रणवाभ्यांतुमोक्षमाप्नोतिनिश्चितम् ॥ ४५ ॥ एवंमन्त्रवरंयस्तुभजतेभक्ति
तत्परः ॥ इहभुक्त्वावरान्भोगान्समस्तऋद्धिसंयुतान् ॥ ४६ ॥ संपत्तिपरमांलब्धायाया
दंतेपरंपदं ॥ कामेन्द्राद्यापराशक्तिर्नादबिंदुसमन्विता ॥ ४७ ॥ कथितःकृष्णमंत्राणांसर्वे
षांमंत्रनायकः ॥ ऋषिर्ब्रह्मासमाख्यातोविराट्छंदउदीरितं ॥ ४८ ॥ त्रैलोक्यमोहनोदेवः
श्रीकृष्णःपरिकीर्तितः ॥ कलषट्दीर्घबीजेनषडंगपरिकीर्तितं॥ ४९॥अंसालंबितवामकुंडल
धरंमंदोल्लसद्भूषणंकिंचित्कुंचितकोमलाधरपुटंसाचिप्रसारेक्षणं ॥ अलोलांगुलिपल्लवैर्मुरलि
कामापुरयंतंमुदामूलेकल्पतरोस्त्रिभंगललितंध्यायेज्जगन्मोहनं ॥ ५० ॥ एवंध्यात्वाजपेन्मं
त्रंश्रद्धयादशलक्षकं ॥ तद्दशांशेनजुहुयात्पायसैरथवांबुजैः ॥ ५१ ॥ दशाक्षरोदितेपीठेपूज
येत्तद्विधानतः ॥ प्रयोगानपिसर्वत्रतदुक्तानपिकारयेत् ॥५२ ॥ अथवाबालकृष्णंचनीलेंदी
वरसन्निभं ॥ रत्नाभरणसंदीप्तद्विभुजंरत्नकुंडलं ॥ ५३ ॥ पायसंनवनीतंचकराभ्यांदध
तंस्मरेत् ॥ लक्षमेकंजपेन्मंत्रंहोमयेत्पायसैःशुभैः ॥५४॥ दशांशंजुहुयाद्भक्त्यापुजांगेन्द्रादि

आयुधैः ॥ होमयेदयुतंमंत्रीघृतभर्जितपिष्टकैः ॥ ५५ ॥ अलक्ष्मीर्नश्यतिक्षिप्रंकांतिंतेजश्च विंदति ॥ पलाशकुसुमैर्हुत्वावाक्सिद्धिंलभतेध्रुवं ॥ ५६ ॥ पंकजैर्जुहुयान्मंत्रीघृतभर्जित पिष्टकैः ॥ अलक्ष्मीर्नश्यतिक्षिप्रंकांतिंतेजश्चविंदाति ॥ ५७ ॥ पंकजैर्जुहुयान्मंत्रीअयुतं श्रियमाप्नुयात् ॥ नवनीतस्यहोमेनकविर्वाग्मीप्रजायते ॥ ५८ ॥ वसुदेवपदंचोक्त्वानिगड च्छेदनायच ॥ वासुदेवपदंचोक्त्वास्वाहेतितन्मनुर्मतः ॥ ५९ ॥ नारदोऽस्यमुनिःप्रोक्त श्छंदोऽनुष्टुबुदीरितं ॥ निगडच्छेदनोलक्ष्मीवासुदेवस्यदेवता ॥६०॥ पंचांगादिमनोरस्यआ चक्राद्यैःप्रकल्पयेत् ॥ रंगमंडलमध्येतुकंसंनिपात्यलीलया ॥ ६१ ॥ ज्ञातीनांवर्धयन्ह र्षआनीयपितरौस्वयम् ॥ निगडान्मोक्षितोभक्त्याप्रणम्यचपुनःपुनः ॥ ६२ ॥ राज्येसंस्था प्यविधिवद्देवकंवीक्षितैर्नृपैः ॥ एवंध्यात्वाजपेल्लक्षंजुहुयात्तद्दशांशतः ॥ ६३ ॥ अंगैराशा धिपैःसम्यक्तदस्तैरर्चनोदितैः ॥ यएनंचिंतयेन्मंत्रीससम्यक्संपदांपदं ॥६४॥ राजदुर्गभया दिभ्योमुच्यतेस्मरणात्क्षणात् ॥ निर्गुंडीमूलहोमेनमुच्यतेबंधनार्दितः ॥ ६५ ॥ राजद्वारेभ येघोरेस्मरणात्मुच्यतेभयात् ॥ ६६ ॥ इतिश्रीगौतमीयतन्त्रे त्रयोविंशोऽध्यायः ॥ २३ ॥

नारदउवाच ॥ गोपालंपिंडसंज्ञांतंकथयामिमुनेश्रृणु ॥ यदाकर्ण्यगुरोर्भक्त्यापरत्रेहचमो दते ॥ १ ॥ अनेनसदृशोमंत्रोजगत्स्वपिनदृश्यते ॥ पंचांतकोधरासंस्थईराचतुर्दशस्वरैः

दते ॥ १ ॥ अनेनसदृशोमंत्रोजगत्स्वपिनदृश्यते ॥ पंचांतकोथरासंस्थईराचतुर्दशस्वरैः


॥ २ ॥ कथितोमंत्रराजोऽयंभुक्तिमुक्तिफलप्रदः ॥ ऋषिर्ब्रह्मास्यगायत्रीछंदःश्रीकृष्णदैवतं ॥ ३ ॥ गालाभ्यंनिजशक्तीतुकीलकंऔर्वमुच्यते ॥ षट्दीर्घभाजाबीजेनषडंगानिप्रकल्पयेत् ॥ ४ ॥ वृंदावनगतंकृष्णंरत्नसिंहासनेस्थितं ॥ कदंबमूलदेशेतुगोपिकाजनवेष्टितं ॥ ५ ॥ नारदाद्यैर्मुनिवरैर्दिव्यज्ञानपरात्मकैः ॥ सहितंपरयाभक्त्यावनमालिनमीश्वरम् ॥ ६ ॥ रत्नालंकारसंदीप्तंशंखचक्रलसत्करं ॥ शब्दब्रह्ममयंवेणुमधःपाणिद्वयेरितं ॥ ७ ॥ एवंध्यात्वामनुवरंलक्षमात्रंजपेद्वशी ॥ सितान्वितैःपायसैस्तुअयुतंहोममाचरेत् ॥ ८ ॥ यएनंभजतेमंत्रीसिद्धयस्तस्यहस्तगाः ॥ धवलैःकुसुमैर्होमाद्वाक्सिद्धिंलभतेऽचिरात् ॥ ९ ॥ कर्णिकारस्यहोमेनलक्ष्मीःसर्वविधाभवेत् ॥ अनेनमंत्रितंतोयंप्रातःप्रातःपिबेन्नरः ॥१०॥ कविर्वाग्मीश्रुतिधरःसर्वज्ञोजायतेऽचिरात् ॥ अस्योपासनमात्रेणकिन्नसिद्ध्यतिमंत्रिणः॥११॥ इहभोगान्वरान्भुक्त्वापुत्रपौत्रैःसमन्वितः ॥ अंतेतत्परमंधाममंत्रीयातिनिरामयं ॥१२॥ अथवक्ष्येमहायंत्रंसर्वेप्सितफलप्रदं ॥ यस्यधारणमात्रेणकिन्नसिद्ध्यतिभूतले ॥ १३ ॥ बीजंत्रिकोणमालिख्यषट्कोणंतद्बहिर्लिखेत् ॥ षडक्षरंलिखेत्तत्रवृत्तंचाष्टदलंलिखेत् ॥ १४ ॥ अष्टाक्षरेणसंयुक्तंतद्बहिःषोडशच्छदं ॥ षोडशार्णंकृष्णमनुंबहिर्दशदलान्वितं ॥ १५ ॥ दशाक्षरेणसंयुक्तंअष्टादशदलेततः ॥ अष्टादशार्णंतन्मध्येबहिर्द्वात्रिंशदंबुजं ॥ १६ ॥ अनुष्टु

बाह्यंतनेवतद्बहिर्वृत्तमालिखेत् ॥ विलिखेत्पिंडबीजंतुवेष्टयित्वातुसर्वतः ॥ १७ ॥ तद्बाहिर्वृत्तंनिष्पाद्यमातृकांतत्रवेष्टयेत् ॥ वृत्तद्वयंपुनःकृत्वापाशांकुशेनवेष्टयेत् ॥ १८ ॥ तद्बहिर्वृत्तमेकंतुचतुरस्रंसवज्रकं ॥ एतदुक्तंमहायंत्रंकृपयामुनिसत्तम ॥ १९ ॥ स्वर्णपत्रेऽथभूर्जेवा लिखित्वायन्त्रराजकं ॥ अष्टगंधैर्मषिंकृत्वालिखेत्स्वर्णशलाकया ॥ २० ॥ प्राणान्संस्थाप्यविधिवत्सहस्रंहोममाचरेत् ॥ तदंतेऽयुतसंख्यंचजप्त्वायंत्रंचधारयेत् ॥२१॥ अस्यधारणमात्रेणसाक्षाद्भूमिपुरंदरः ॥ मुच्यतेमलिनैःकृच्छ्रैर्दुःखैर्घोरतरैरपि ॥२२॥ शांतिंचशाश्वतींलब्ध्वायातितत्परमंपदं ॥ स्त्रीणांवामभुजेचास्यधारणात्किन्नसिद्ध्यति ॥२३॥ वंध्यापिलभतेपुत्रान्शतहायनजीविनः ॥ दीर्घायुरप्रतिहतबलवीर्यसमान्वितान् ॥ २४ ॥ राशिचक्रंविलिख्याथकुंभंसंस्थाप्यपूर्ववत् ॥ निक्षिप्ययंत्रंतन्मध्येसेकात्सर्वंहिसाधयेत् ॥ २५ ॥ तत्वदर्शीभवेद्विप्रोमहींशास्तिमहीपतिः॥ वैश्यःसमृद्धिमान्भूयाल्लभेच्छूद्रोयथेप्सितं॥२६॥एतत्तेकथितंयंत्रंपुरुषार्थैकसाधनं ॥ केवलंत्वंस्वयत्नेनगोपायस्वमुनेस्वयं ॥ २७ ॥ इतिश्रीगौतमीयतन्त्रे चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ छ ॥

श्रीनारद उवाच ॥ अथवक्ष्येमनुवरंसमस्तपुरुषार्थदं ॥ यज्ज्ञात्वासिद्धयःसर्वाभवंतिकरसंस्थिताः ॥ १ ॥ लक्ष्मीमायाकामबीजंङेंतंकृष्णपदंतथा ॥ स्वाहेतिमंत्रराजोऽयंभुक्तिमुक्ति

स्थिताः ॥ १ ॥ लक्ष्मीमायाकामबीजङेंतकृष्णपदंतथा ॥ स्वाहेतिमंत्रराजोऽयंभुक्तिमुक्ति

फलप्रदः ॥२॥ नारदोऽस्यमुनिःख्यातश्छंदोनुष्टुबुदीरितं ॥ देवताकृष्णइत्युक्तासमस्तपुरुषा
र्थदः ॥ ३ ॥ षडंगंकामबीजेनषट्दीर्घभेदितेनच ॥ कलापकुसुमश्यामंवृंदावनगतंहरिं
॥ ४ ॥ गोपगोपीगवावीतंपीतवस्त्रयुगावृतं ॥ नानालंकारसुभगंकौस्तुभोद्भासिवक्षसं
॥ ५ ॥ सनकाद्यैर्मुनिश्रेष्ठैःसंस्तुतंपरमयामुदा ॥ शंखचक्रलसद्बाहुंवेणुंहस्तद्वयेरितं ॥ ६ ॥
ध्यात्वैवंपरमात्मानंचतुर्लक्षंजपेन्मनुं ॥ दशांशैर्जुहुयान्मंत्रीकुसुमैर्ब्रह्मवृक्षजैः ॥७ ॥ भक्त्या
त्रिसंध्यंप्रजपेदंगैरिंद्रादिभिस्ततः ॥ यथाप्रयोगान्कुर्वीतधर्मार्थकाममुक्तये ॥ ८ ॥ पाय
सैरयुतंहुत्वाज्ञानंदिव्यमवाप्नुयात् ॥ तद्वच्चलवणैर्हुत्वालोकानाकर्षयेद्ध्रुवं ॥ ९ ॥ पलाश
पुष्पैर्जुहुयात्कविर्वाग्मीचजायते ॥ मत्स्यंडीकदलीदुग्धागुडपायसतद्धिया ॥ १० ॥ तर्प
येदयुतंमंत्रीगांगेयेनजलेनवै ॥ मंडलाद्विहितासिद्धिर्भवेन्नैवात्रसंशयः ॥ ११ ॥ वाग्मी
ह्येनजप्येनवागीशसमतांव्रजेत् ॥ व्याघ्रीजकुसुमैर्हुत्वानिधिमाप्नोत्ययत्नतः ॥ १२ ॥
श्रीवृक्षफलहोमेनराज्यैश्वर्यमवाप्नुयात् ॥ एवंतेकथितोविप्रदुर्लभोमंत्रनायकः ॥ १३ ॥ त
त्संप्रदायसंप्राप्तःकिन्नसिद्ध्यतिमांत्रिणः ॥ अष्टादशार्णोमारांतोमंत्रःसुतधनप्रदः ॥ १४ ॥
नारदोऽस्यमुनिश्छंदोगायत्रंकाथितंबुधैः ॥ बाळकृष्णोदेवतास्यसमस्तार्थफलप्रदः ॥ १५ ॥
षट्दीर्घभाजाकामेनबीजेनांगक्रियामता ॥ इंदीवरसमाभासंबालंत्रैलोक्यमोहनं ॥ १६ ॥

लसद्रत्नमयैर्दीप्तैर्मंडितंबहुभूषणैः ॥ नानारत्नमयोद्भासिवैयाघ्रनखभूषणं ॥ १७ ॥ कुंतलांतसमुद्भासिस्फुरन्मकरकुंडलं ॥ हस्तिहस्तकराभ्यांचनवनीतंचपायसं॥१८॥ दधंतंदेववद्देश्ववेष्टितंगोपबालकैः ॥ एवंध्यात्वाजपेन्मंत्रंद्वाविंशल्लक्षमानतः ॥ १९ ॥ जपांतेजुहुयादन्नैपायसैस्तद्दशांशतः ॥ तर्पणादीनिसर्वाणिपूर्ववत्समुपाचरेत् ॥ २० ॥ साधयेत्सर्वकर्माणिसिद्धेनानेनमंत्रवित् ॥ रक्तपद्मायुतंहुत्वाद्दिजोज्ञानमवाप्नुयात् ॥ २१ ॥ सर्वलोकैकशास्ताचक्षात्रियोनात्रसंशयः ॥ अन्येषांयद्यदिष्टंतत्साधयेन्मनुनामुना ॥ २२ ॥ रक्तपद्मोपरिध्यात्वाशर्करापृथुलाजकैः ॥ कदलीगुडवुध्याचजलैःसंतर्प्यकेशवं ॥ २३ ॥ वत्सराल्लभतेपुत्रंसर्वलोकनमस्कृतं ॥ अनेनैवयदुद्दिष्टंजपमात्रेणसाधयेत् ॥ २४ ॥ मायारमाकामबीजंत्रयाद्योदशवर्णकैः ॥ त्रयोदशाक्षरोमंत्रोदृष्टादृष्टफलप्रदः ॥ २५ ॥ ऋषिरस्यस्वयंब्रह्माछंदोनुष्टुबुदाहृतं ॥ श्रीकृष्णोदेवताभक्तोमहदैश्वर्यदायकः ॥ २६ ॥ कुर्यादस्यमनोर्मंत्रीकामाद्यैरंगपंचकं ॥ शंखचक्रगदापद्मपाशांकुशलसत्करं ॥ २७ ॥ कराभ्यांवेणुमादायधमंतंसर्वमोहनं ॥ सूर्यायुतसमाभासंपीतांबरयुगावृतं ॥ २८ ॥ नानालंकारसुभगंरविमंडलसंस्थितं ॥ एवंध्यात्वाजपेन्मंत्रंचतुर्लक्षमनन्यधीः ॥ २९ ॥ जपांतेतद्दशांशेनपायसैर्होमयेद्द्विज ॥ पूजयेद्यंत्रराजेचवक्ष्यमाणेनवर्त्मना ॥ ३० ॥ मध्येकृष्णंसमावाह्यषडंगंविधिना

द्विज ॥ पूजयेद्यंत्रराजे[illegible] ॥ ३० ॥ [illegible]समावाह्यषडंगविधिना



र्चयेत् ॥ वासुदेवंसंकर्षणंप्रद्युम्नंचानिरुद्धकं ॥ ३१ ॥ दिग्दलेषुसमभ्यर्च्यबहिरचैद्विदिग्दले ॥
सरस्वतींतथालक्ष्मींरतिंप्रीतिमनंतरं ॥ ३२ ॥ स्वदिक्षुलोकपालांश्चतदस्त्राणिचतद्बहिः ॥
एतदभ्यर्च्यविधिवत्साधयेत्सयथेप्सितं ॥ ३३ ॥ विंशत्यर्णोदितान्सर्वान्प्रयोगानपिसाधये
त् ॥ यएवंभजतेमंत्रीभक्त्याचपरिपूजयेत् ॥ ३४ ॥ राजैश्वर्यमवाप्यांतेभूयात्तत्परमंमहः ॥
काममायारमापूर्वादशार्णोमनुनायकः ॥ ३५ ॥ रमामायाकामपूर्वादशार्णःसप्रकीर्तितः ॥
अनयोर्मंत्रयोर्मंत्रीआचक्राद्यैःषडंगकं ॥ ३६ ॥ कृत्वादशार्णवत्सम्यक्ध्यानपूजादिकं
सुधीः ॥ सपर्यांचरतेयस्तुमंत्रयोरेकमाश्रितः ॥ ३७ ॥ इहभुक्त्वावरान्भोगान्महैश्वर्यसम
न्वितान् ॥ पुत्रैःपौत्रैःप्रपौत्रैश्चदेहांतेहरितांव्रजेत् ॥ ३८ ॥ अथवक्ष्येशृणुमुनेप्रतिपत्तिंज
गद्गुरोः ॥ इन्द्रादिप्रमुखैर्देवैःसुगुप्ताक्रियतेतुया ॥ ३९ ॥ कुबेरोऽपिचयांज्ञात्वाउपास्यब्रह्म
णोमुखात् ॥ महेशसखितांप्राप्यधनेशत्वमवाप्तवान् ॥ ४० ॥ इन्द्रोऽपियामुपास्यैवदेवराज
त्वमाप्तवान् ॥ त्रैलोक्यविजयीदेवोदेवदैत्यैकशासनः ॥ ४१ ॥ मायारमादिगश्वाऽष्टादशा
र्णोविंशदर्णकः ॥ अनेनसदृशोमंत्रस्त्रिषुलोकेषुदुर्लभः ॥ ४२ ॥ ऋषिर्ब्रह्मासमादिष्टोगाय
त्रीछन्दएवच ॥ देवतादेवताद्वंद्वंयःश्रीकृष्णईरितः ॥ ४३ ॥ अष्टादशार्णवत्कुर्यान्मंत्रा
र्णैरंगकल्पनं ॥ द्वारवत्यांमहोद्यानेदीर्घिकाशतमंडिते ॥ ४४ ॥ पारिजातवनेरम्येसुवर्णभू

मिमध्यतः ॥ सर्वरत्नमयेचित्रेसुमेरुनिभमंडपे ॥ ४५ ॥ सिंहासनेसमासीनंसूर्यकोटिसम
प्रभं ॥ रक्तोत्पलसमाभासपाणिपादांबुजंस्मरेत् ॥ ४६ ॥ शंखचक्रगदापद्मलसद्बाहुचतु
ष्टयं ॥ सर्वांगसुंदरंदेवंसर्वाभरणभूषितं ॥ ४७ ॥ रत्ननद्याःसमुद्धृत्यसर्वरत्नैश्चवेष्टितं ॥ रु
क्मिणीसत्यभामाचवामदक्षेचातिष्ठतः ॥ ४८ ॥ रत्नकुंभेनरत्नेनसिंचिंत्यौपरयामुदा ॥
कालिंदीऋक्षजातत्रदिशंत्यौकलशौतयोः ॥ ४९ ॥ नाग्नजितिसुनंदाचमित्रविंदासुलक्षणा ॥
आनीयरत्नकलशंरत्ननद्याःसमुद्धृतं ॥ ५०॥ दिशंत्यःसर्वमांगल्यसंपन्नामहिषीर्हरेः ॥ ततः
षोडशसाहस्त्रंसिंचत्यःपरितःप्रियाः॥५१॥ गीतैर्नृत्यैश्चवाद्यैश्चमुमुहुःसर्वदेवताः ॥ एवंहरिंस्म
रन्मंत्रीचतुर्लक्षंजपेन्मनुं ॥ ५२ ॥ जपांतेपायसैर्दिव्यैर्जुहुयात्तद्दशांशतः ॥ तर्प्येतेतद्दशांशे
नभक्तितश्चेंदुमज्जलैः ॥ ५२ ॥ अभिषिच्यदशांशेनब्राह्मणानपिभोजयेत् ॥ कर्णिकायांलि
खेद्बीजंस्वसाध्यंतद्बहिर्लिखेत् ॥ ५३ ॥ शेषसप्तदशार्णेनवन्हेर्गेहयुगंततः ॥ वृत्ताद्बहिरष्ट
दलंचतुरस्त्रंसवज्रकं ॥ ५४ ॥ चतुर्द्वारसमायुक्तंयंत्रमेतत्सुलक्षणं ॥ पूर्वदक्षिणपाश्चात्य
कोणेमायांविलिख्यतु ॥ ५५ ॥ श्रीबीजमन्यतोलेख्यंषडर्णंकोणगंतथा ॥ पत्रेतुकामगा
यत्रींत्रिंशास्त्रिंशोविभागशः ॥ ५६ ॥ कामदेवायसंप्रोच्यविद्महेतदनतरं ॥ पुष्पबाणाय
धीमहितन्नोऽनंगःप्रचोदयात् ॥ ५७ ॥ इत्युक्ताकामगायत्रीसमस्तजनमोहिनी ॥ कामाद्य

धीमहितन्नोऽनंगःप्रचोदयात् ॥ ५७ ॥ [illegible] कामाद्य



जपादस्यास्तुसर्वकामान्प्रसाधयेत् ॥ ५८ ॥ दलमध्येलिखेत्काममनुषट्कंक्रमेणतु ॥ नमोंतिकामदेवायसर्वजनप्रियायच ॥ ५९ ॥ सर्वसंमोहनायेतिज्वलयुक्प्रज्वलेतिच ॥ सर्वजनस्यशब्दांतेत्हृदयंमोततोवदेत् ॥ ६० ॥ वशंकुरुद्वयंप्रोक्त्वास्वाहांतोमनुरीरितः ॥ प्रोक्तोगोपालमंत्रोऽयंकामाद्यःसिद्धिदोमनुः ॥ ६१ ॥ हाटकैरचितेपात्रेभूर्जेवाप्रविलिख्यच॥ धारयेत्साधितंयंत्रंजपसेकसमन्वयात् ॥ ६२ ॥ अस्यधारणमात्रेणकिन्नसिद्ध्यतिभूतले ॥ राजानोवशतांयांतिदासवच्छात्रवंकुलं ॥ ६३ ॥ त्रैलोक्यमोहनोमंत्रःसर्वलोकैकपूजितः ॥ अस्मिन्यंत्रेसमावाह्यराजराजेश्वरंहरिं ॥६४॥ पूजयेच्छक्तितोमंत्रीसर्वराजोपचारकैः॥ कोणषट्कषडंगंतुतद्बहिश्वविदिग्दिशि ॥ ६५ ॥ वासुदेवंसंकर्षणंप्रद्युम्नंचानिरुद्धकं ॥ सरस्वतींतथालक्ष्मींरतिंप्रीतिंविदिग्दले ॥ ६६ ॥ तद्बहिरष्टमहिषीरुक्मिण्याद्याःप्रपूजयेत् ॥ इन्द्रनीलमुकुंदाख्यान्मकरानंदकच्छपान् ॥ ६७ ॥ शंखपद्मनिधींश्वापितद्बहिःपूजयेत्ततः ॥ इन्द्रादीन्स्वस्वदिक्ष्वेववज्रादींस्तदनंतरं ॥६८॥ इतिषष्ठावृतियुतमच्युतंभक्तितोऽर्चयेत् ॥ संसारसागरंघोरंवासनानक्रसंकुलं ॥६९॥ संतीर्यपरमंधाममंत्रीयातिनचान्यथा ॥ चतुर्लक्षंजपेन्मंत्रंदशांशैःपायसैर्हुनेत् ॥ ७० ॥ अथवापंकजैःफुल्लैःशेषमन्यत्समापयेत् ॥ उद्वास्यत्हृदयेविष्णुंन्यस्यन्यासान्यथोदितान् ॥ ७१ ॥ तन्मयःप्रजपेन्मन्त्रमष्टोत्तरशतम्पु

नः ॥ तन्मयोविहरेन्मंत्रीतीर्णःसंसारसागरं ॥ ७२ ॥ अयुतंरक्तपद्मैस्तुहुत्वाविश्वंवशंन
येत् ॥ तद्भस्मधारयेद्भालेसंस्पृशेद्यंनिरीक्षयेत् ॥ ७३ ॥ संस्पृष्टोवीक्ष्यतेयैर्वातेभवंत्यस्य
किंकराः ॥ आरक्तहयमारैस्तुराजानोदासवद्वशेत् ॥ ७४ ॥ शुक्लादिवस्त्रलाभायशुक्ला
दिकुसुमैर्हुनेत् ॥ हुनेद्धान्यसमृद्ध्यैचआरक्ताधान्यमंजरीः ॥ ७५ ॥ श्रीवृक्षकुसुमैर्होमात्
सद्योलक्ष्मीःप्रसीदति ॥ बिल्वपत्रैश्चजुहुयात्पुत्रपौत्रानुयायिनीं ॥ ७६ ॥ लभेल्लक्ष्मींनसंदेह
स्तत्फलैराज्यमाप्नुयात् ॥ केवलंघृतहोमेनब्राह्मंतेजश्चजायते ॥ ७७ ॥ आयुर्वृद्धिंयशोल
क्ष्मींविश्यतांसर्वयोषितां ॥ लभतेनात्रसंदेहःसुखंसर्वातिशायिनं ॥ ७८ ॥ घृततंदुलहोमेन
बलवान्जायतेऽचिरात् ॥ भक्ष्यभोज्यादिकंहुत्वाभोगीस्याद्यावदायुषम् ॥ ७९ ॥ अष्टाद
शार्णदशयोःप्रयोगांस्तत्रचाचरेत् ॥ अत्रेरितान्प्रयोगांस्तुताभ्यामेवचकारयेत् ॥ ८० ॥
रत्नाभिषेकगोपालंयोऽनेनाविधिनाभजेत् ॥ सर्वैश्वर्यसमृद्धोऽसौसर्वभुक्सर्वकारकः ॥८१॥
देहत्यागेहरिंप्रायादित्येवंमुनयोजगुः ॥ ८२ ॥ इतिश्रीगौतमीयतन्त्रे पंचविंशोऽध्यायः ॥
नारद उवाच ॥ अथातःसंप्रवक्ष्यामिरुक्मिणीवल्लभंमनुं ॥ यज्ज्ञानात्सर्वलोकानांवल्लभो
भुविजायते ॥ १ ॥ नमोंतेभगवन्ङेंतोरुतोरुक्मिणीवल्लभा ॥ स्वाहांतस्तारसंयुक्तःषोड
शार्णोमहामनुः ॥ २ ॥ अस्यज्ञानात्तथामंत्रीज्ञानवान्जायतेऽचिरात् ॥ ध्यानादष्टांगयोग

शार्णोमहामनुः ॥ २ ॥ अस्यज्ञानात्तथामंत्रीज्ञानवान्‌जायतेध्रुवं ॥ ध्यानादष्टागयाग

स्यफलमाप्नोतिनिश्चितं ॥ ३ ॥ स्मरणादस्यमंत्रस्यसर्वतीर्थफलंलभेत् ॥ नारदोऽस्यमुनिः प्रोक्तश्छंदोनुष्टुबुदाहृतं ॥ ४ ॥ श्रीकृष्णोदेवताचास्यरुक्मिणीवल्लभाह्वयः ॥ व्यस्तैःसमस्तैरंगानिपदैःकुर्यात्षडंगवित् ॥ ५ ॥ अतसीकुसुमश्यामंपीतवस्त्रयुगावृतं ॥ नानालंकारसुभगंकौस्तुभैर्युक्तवक्षसं ॥ ६ ॥ श्रीवत्सलांछनंश्रीमन्नानाभरणभूषितं ॥ द्वारकावरगेहस्थरत्नसिंहासनेशुभे ॥ ७ ॥ रुक्मिण्यालपमधुरंशंखचक्रगदांबुजं ॥ ध्यात्वैवंपरमानंदंलक्षमेकंजपेन्मनुं ॥ ८ ॥ तद्दंतेजुहुयान्मंत्रीतिलैर्मधुरसंयुतैः ॥ पूजयेद्वैष्णवेपीठेदशाक्षरविधानतः ॥ ९ ॥ पालाशैःकुसुमैर्हुत्वादिव्यंज्ञानमवाप्नुयात् ॥ पूर्ववत्तर्पणंकुर्यात्सर्वाभीष्टानिसाधयेत् ॥ १० ॥ पुंडरीकायुतंहुत्वाश्रियमाप्नोत्ययत्नतः ॥ केवलंघृतहोमेनजीवेद्वर्षशतंसुधीः ॥ ११ ॥ इत्येवंरुक्मिणीनाथविधानंमुनिपूजितं ॥ भोगमोक्षकरंयस्मान्मुनेत्वमपिगोपय ॥१२॥ प्रणवंनमनस्यांतेवदेद्भगवतेपदं ॥ नंदपुत्रपदंङेंतंवदेन्नंदवपुस्तथा ॥१३॥ भूत्यन्तेदशवर्णश्चमनुःसर्वार्थसाधकः ॥ नारदोऽस्यमुनिराख्यातश्छंदउक्तंविराडपि ॥१४॥ श्रीकृष्णोदेवताचात्रचतुर्वर्गफलप्रदः ॥ पंचांगानिमनोरस्यआचक्राद्यैःप्रकल्पयेत् ॥ १५ ॥ ध्यायेद्वृंदावनेरम्येगोपगोपीगणावृतं ॥ नानालंकारसुभगंपीतांबरयुगावृतम् ॥ १६ ॥ सर्वप्रियकरंदेवंकिशोरंश्यामविग्रहं ॥ दोर्भ्यांवेणुंवादयंतंभुवनैकगुरुंपरं ॥ १७ ॥ एवंध्यात्वाम

नुवरंलक्षमेकंजपेत्तथा ॥ तिलैश्चस्वादुयुक्तैश्चजुहुयात्तद्दशांशतः ॥ १८ ॥ दशाक्षरोदितेपी
ठेपूजयेत्तद्विधानतः ॥ यएवंभजतेमंत्रीभोगमुक्त्योःसभाजनं ॥१९ ॥ बिल्वपत्रायुतंहुत्वा
सर्वकामान्प्रसाधयेत् ॥ अष्टोत्तरशतंजप्त्वासभायांविजयीभवेत् ॥ २० ॥ सर्वलोकैकसु
भगस्सर्वैश्वर्यसमन्वितः ॥ देहांतेतत्पदंयातियद्गत्वाननिवर्तते ॥ २१ ॥ नंदपुत्रपदंङेंतं
श्यामलांगपदंतथा ॥ अमृतंमुखवृत्तंचमांसंचैववपुस्तथा ॥ २२॥ दशाक्षरांतःप्रोक्तोऽयंम
नुःसर्वसमृद्धिदः ॥ नारदोऽस्यमुनिःप्रोक्तश्छंदोनुष्टुबुदाहृतं ॥२३॥ देवताबालकृष्णोऽस्यमु
निभिःपरिकीर्तितः ॥ कल्पयेत्पूर्ववन्मंत्रीचक्राद्यैरंगकल्पनां ॥२४॥ अतसीकुसुमश्यामंशं
खचक्रलसत्करं ॥ दोर्भ्यांवेणुंवादयंतंपीतांबरयुगावृतं ॥ २५ ॥ नानालंकारसुभगंतारहा
रविराजितं ॥ एवंध्यात्वायजेद्देवंपंचांगैश्चादिशाधिपैः ॥ २६ ॥ तदस्त्रैरपिसंपूज्यजपेल्लक्षंत्र
तेस्थितः ॥ दशांशंजुहुयान्मंत्रीपायसैर्मधुरावृतैः ॥ २७ ॥ एवंसंसिद्धमंत्रस्तुसर्वकर्माणि
साधयेत् ॥ तिलाज्यैरयुतंहुत्वाग्रहरोगान्विनाशयेत् ॥ २८ ॥ पलाशकुसुमैर्हुत्वावागीश
समतांव्रजेत् ॥ प्रणवंश्रीकाममायानमोभगवतेपदं ॥ २९ ॥ नंदपुत्रपदंङेंतंभूधरोमुखवृत्त
युक् ॥ मांसंवपुःपदंङेंतंमनुर्विंशतिवर्णकः ॥ ३० ॥ नारदोऽस्यमुनिःप्रोक्तोविराट्छंदउदी
रितं ॥ देवतानंदतनयःसर्वलोकैकनंदनः ॥ ३१ ॥ पंचांगानिमनोरस्यचक्राद्यैःपरिकल्पये

रितं ॥ देवतानंदतनय...

त् ॥ नवीननीरदश्यामंपद्मपत्रनिभेक्षणं ॥ ३२ ॥ मुक्तादामलसत्कंठंकेयुरांगदभूषणं ॥ अनेकरत्नसंबद्धस्फुरन्मकरकुंडलं ॥ ३३ ॥ उदारकौस्तुभोद्भासिवक्षःश्रीवत्सलांछनं ॥ बर्हिबर्हकृतोत्तंसंगोपगोपीगवावृतं ॥ ३४ ॥ ध्यात्वैवंपरमानंदंजपेन्मनुवरंततः ॥ चतुर्लक्ष जपांतेतुदशांशंरक्तपंकजैः ॥ ३५ ॥ होमयेच्छेषमन्यत्तुपूर्ववत्समुपाचरेत् ॥ दशार्णयंत्रेविश्वेशंसमावाह्यप्रपूजयेत् ॥ ३६ ॥ प्रथमावृतिरंगैस्स्यान्महिषीभिर्द्वितीयका ॥ तृतीयादिगधीशैस्तुवज्राद्यैस्तुचतुर्थिका ॥ ३७॥ एवंयःपूजयेत्कृष्णंचतुरावृतिसंयुतं ॥ धर्मार्थकाममोक्षाणांसंपूर्णंलभतेफलं ॥३८॥ पायसैस्सुतंहुत्वामहाधनपतिर्भवेत् ॥ पूर्णायुर्लभतेमंत्रीचायुतंघृतहोमतः ३९ ॥ दूर्वायालक्षहोमेनजीवेद्वर्षशतंसुधीः ॥ इत्येषकथितोमन्त्रस्सर्वेषांसर्वसिद्धिदः ॥ ४० ॥ अथापरंप्रवक्ष्यामिमनुंसर्वसमृद्धिदं ॥ यंज्ञात्वामुनयःसर्वभोगमोक्षैकभूमयः ॥ ४१ ॥ लीलादंडधरंचोक्त्वागोपीजनपदंततः ॥ संसक्तदोर्दंडपदंमेघश्यामपदंततः ॥ ४२ ॥ विष्णोस्वाहेतिमंत्रोऽयंसमस्तपुरुषार्थदः ॥ नारदोऽस्यमुनिःप्रोक्तश्छंदोनुष्टुबुदाहृतं ॥४३॥ देवताश्रीकृष्णोऽस्यसर्वविश्वार्थसाधकः ॥ पदैःपंचांगक्लृप्तिःस्यात्ततोध्यायेदथाच्युतं ॥ ४४ ॥ तापिच्छकुसुमश्यामंसदाषोडशवार्षिकम् ॥ गोपीमध्यस्थितंताभ्यांलिंगितंकामालिप्सया ॥ ४५ ॥ सर्वालंकारसुभगंपीतांबरधरंपरम् ॥ भुवनैकगुरुंध्यात्वालक्ष

मेकंजपेन्मनुं ॥ ४६ ॥ दशांशंकमलैर्हुत्वाशेषमन्यत्समापयेत् ॥ तर्पयेन्नित्यशोदेवंदुग्धबु
द्ध्याशुभैर्ज्जलैः ॥ ४७ ॥ मंडलाद्वांछितासिद्धिर्भवेद्धनपतिस्तथा ॥ यइमंभजतेमंत्रंज
पहोमादितत्परः ॥ ४८ ॥ वांछितानीहिताल्लब्ध्वादेहांतेतत्पदंव्रजेत् ॥ वेदादिकमलामाया,
कामबीजादथोवदेत्॥४९॥श्रीकृष्णंचपदंङेंतगोविंदंचतथावदेत्॥ गोपीजनपदस्यांतेवल्लभं
ङेंतमीरयेत् ॥ ५० ॥कामांतंचरमाबीजंसंप्रोक्तोमंत्रनायकः ॥ सिद्धिगोपालमंत्रोऽयंसर्वसि
द्धिप्रदोनृणां ॥ ५१ ॥ बीजैःपदैश्चपंचांगंकृत्वाध्यायेदथाच्युतं ॥ पक्षिराजकृतच्छायौसुर
द्रुमलतासिनौ ॥ ५२ ॥ शंखमरकताभ्यासौदध्युत्थपायसाशिनौ ॥ अलकैरावृतमुखौग्र
हयुक्तौयथाविधू ॥ ५३ ॥ नानालंकारसुभगौकौस्तुभामुक्तकंधरौ ॥ तारहारावलीरम्यौ
सर्वाश्चर्यमयौशिशू ॥ ५४ ॥ त्रैलोक्यशरणौश्रीमद्रामकृष्णौस्मरन्जपेत् ॥ दशाक्षरोदिते
पीठेवक्ष्यमाणेनपूजयेत् ॥ ५५ ॥ षडंगंकेशरेयज्वादिगीशान्प्रहरणान्यपि ॥ एवंत्रयावृति
मयंसंपूज्यपुरुषोतमं ॥ ५६ ॥ दुग्धबुध्याजलैर्नित्यंतर्पयेदिष्टसिद्धिदं ॥ मुखेकरंसमायो
ज्यजपेद्वाग्मीकविर्भवेत् ॥ ५७ ॥ नवनीतायुतंहुत्वाधनपतिसमोभवेत् ॥ रविवारेश्वत्थ
मूलेअष्टोत्तरशतंजपेत् ॥५८॥पुत्रैर्मित्रैश्चसंपन्नोम्रियतेनापमृत्युना ॥ अथापरंमनुवरंकथया
मिसमृद्धिदं ॥ ५९ ॥ लक्ष्मीमायाकामबीजैर्दशार्णपुटयेत्क्रमात् ॥ षोडशार्णोमनुस्साक्षा

मिसम्पद्धिदं ॥ ५९ ॥ लक्ष्मीमायाकामबीजैर्दशार्णपुटयेत्क्रमात् ॥ षोडशार्णोमनुस्साक्षा

न्महालक्ष्मींप्रयच्छति ॥ ६० ॥ ब्रह्माऋषिस्समुद्दिष्टोगायत्रीछंदईरितं ॥ महासंपत्प्रदःश्री
मान्दैवताकृष्णईरिता ॥ ६१ ॥ दशार्णवदंगक्लृप्तिःध्यायेदेवमनन्यधीः ॥ कालाभनिच
यप्रख्यंपाणिपादांबुजारुणं ॥ ६२ ॥ तारहारावलीरम्यंकौस्तुभामुक्तवक्षसं ॥ किरीटांग
दग्रैवेयकङ्कणोर्मिविराजितं ॥ ६३ ॥ ध्यायेद्रत्नगृहांतस्थंरक्तपंकजमध्यगं ॥ चतुर्लक्षंज
पेन्मंत्रंपायसैरयुतंहुनेत् ॥ तर्पणादीनिसर्वाणिपूर्वोक्तविधिनाचरेत् ॥ ६४ ॥ यएवंभजते
मंत्रीलक्ष्मीगोपालविग्रहम् ॥ ससर्वसंपदंलब्ध्वापात्यनंतमयंततः ॥ ६५ ॥ इतिश्रीगौ
तमीयतन्त्रे षड्विंशोऽध्यायः ॥ २६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
नारद उवाच ॥ अथापरंप्रवक्ष्यामिमंत्रराजंसुदुर्लभं ॥ अवापुर्येनजप्तेनदिव्यज्ञानंमुनिश्वराः
॥ १ ॥ ब्रह्मराज्यंसुरश्रेष्ठमवापुर्यदुपासनात् ॥ अन्येऽपिबहवोदेवाःस्वाधिकारित्वतांगताः
॥ २ ॥ त्रिमात्रंत्वद्भगवतेश्रीगोविंदायेतितन्मनुः ॥ द्वादशाक्षरइत्युक्तोमंत्रःसर्वार्थसिद्धिदः
॥ ३ ॥ नारदोऽस्यमुनिःप्रोक्तोविराट्छंदउदीरितम् ॥ श्रीकृष्णोदेवताप्रोक्तःसर्वलोकनमस्कृ
तः ॥४॥ विनियोगोऽस्यमत्रंस्यपुरुषार्थचतुष्टये ॥ व्यस्तैःपदैःसमस्तैश्चपंचांगानिप्रकल्पयेत्
॥ ५ ॥ सृष्टिसंस्थातिस्थित्याचकरशोधनमाचरेत् ॥ स्थित्यंतंदशतत्वंचमातृकांमनुसंपुटाम्
॥ ६ ॥ तत्वन्यासंतथाकृत्वाकेशवादिपुरःसरं ॥ जनिपालनसंहारविधानैकविशारदं ॥ ७ ॥

कलापकुसुमश्यामंनीलेंदीवरलोचनं ॥ अनेकरत्नाभरणंदीप्तविश्वावकाशकं ॥ ८ ॥ तथै
वासनसंस्थंचपीतवस्त्रयुगावृतं ॥ श्रीवत्सलांछनंदेवंकौस्तुभोद्भासिवक्षसं ॥ ९ ॥ वेणुवाद्य
निनादेनमोहयंतचराचरं ॥ मुनिवृंदैर्देववृंदैर्ऋषिवृंदैस्तुसंस्तुतं ॥ १० ॥ आवृतंमाहिषीवृंदै
र्निधिभिःपरिसेवितं ॥ अथवातप्तहेमाभंकांत्याक्रांतजगत्त्रयम् ॥ ११ ॥ कल्पद्रुमलतासीनं
रत्नसिंहासनोपरि ॥ ध्यात्वाजपेन्मनुवरंलक्षद्वादशमादरात् ॥ १२ ॥ वार्ताकर्णनमात्रंहि
स्त्रीणांत्यक्त्वाव्रतेस्थितः ॥ पयोमूलफलाशीचपूर्वोक्ताचारपालकः ॥१३॥ दशांशंजुहुयाद्ध
न्त्याकुसुमैर्ब्रह्मवृक्षजैः ॥ ततःपूर्वोक्तविधिनाशेषमन्यत्समापयेत् ॥ १४ ॥ गोष्ठेप्रतिष्ठितं
देवंपुण्यारण्येऽथवापुनः ॥ प्रासादेवाप्रतिष्ठाप्यपूजयेत्भोगमोक्षभाक् ॥ १५ ॥ वृंदावन
गतंध्यायेन्महामाणिक्यमंडपे ॥ सामान्यार्घ्यंविशोध्याथपूजयेत्द्वारपालकान् ॥ १६ ॥ द्वा
राग्रेबलिपीठेचपक्षींद्रंपरिपूजयेत् ॥ जयंचाविजयंचैवबलप्रबलसंज्ञकौ ॥ १७ ॥ चंडप्रचं
डमथवाधातारंचविधातृकम् ॥ द्वारेषुपूर्वादिषुतान्प्रादक्षिण्येनपूजयेत् ॥ १८ ॥ द्वारार्द्धंद्वा
रश्रियंयद्वशादेहल्यांदेहलींयजेत् ॥ द्वारपार्श्वयोस्तद्वद्गंगांचयमुनांतथा ॥ १९ ॥ विघ्नेशंक्षेत्र
पालंचतयोःपार्श्वेप्रपूजयेत् ॥ दूर्वाक्षतान्समादायविघ्नमुत्सार्यवाग्यतः ॥ २० ॥ पादाघा
ततलस्फोटसमुदंचितवक्त्रकैः ॥ विघ्नंत्रिविधमुत्सार्यअस्त्रमंत्रेणमंत्रवित् ॥ २१ ॥ कोणेषु

ततलस्फोटसमुदांचित... ॥ २१ ॥ काणगु


विघ्नदुर्गीचवाणींक्षेत्रेसमर्चयेत् ॥ अर्चयेद्वास्तुपुरुषंगृहमध्येसमाहितः ॥ २२ ॥ तारंशार्ङ्ग पदंङेंतंसपूर्वंचशरासनं ॥ हंफुट्नमइत्युक्त्वामुद्रयाग्रेस्थितोहरेः ॥ २३ ॥ विधेयमेतत्सर्वत्र स्थापितेतुविशेषतः ॥ आसनेसूपविष्टस्तुतन्मंत्रेणविधानवित् ॥ २४ ॥ न्यासान्यस्यस्वदे हेचआत्मयागावसानकं ॥ दशाक्षरोक्तविधिनापीठंसंपाद्यपूजयेत् ॥ २५ ॥ नारदादिगुरून्न स्तुत्वाशिष्टान्भागवतान्यजेत् ॥ गुकारस्तुमलंविद्याद्रुकारस्तस्यशोधकः ॥२६॥ गुरुरित्ये वमुनिभिःप्रोक्तःकृष्णैकयोगतः ॥ नारदंपर्वतंजिष्णुंनिशठोद्धवदारुकान् ॥ २७ ॥ विष्व क्सेनंचशैनेयंब्राह्यादीशान्तमर्चयेत् ॥ गुरुंपरंगुरुंचापिपरमेष्ठिगुरुंतथा ॥ २८ ॥ परात्परगु रुंतद्वत्पूर्वसिद्धाननंतरं ॥ सनकश्चसनंदनःसनत्कुमारसंज्ञकः ॥ २९ ॥ सनातनश्चइत्या दिपरान्भागावताँस्तथा ॥ गुरुनामप्रगृह्यैवपादुकाभ्योनमोवदेत् ॥३०॥ अपायात्पातिनि यतंदुस्संगाद्दुर्निमित्तकात् ॥ कामितार्थप्रदानाच्चपादुकापरिकीर्तिता ॥ ३१ ॥ गत्यर्थेच रधातुस्तुणश्चाप्यानंदउच्यते ॥ आनंदंप्रापयेद्यस्मात्तस्माच्चरणउच्यते ॥ ३२ ॥ पिठपूजां विधायाथतत्रावाह्यहरिंजपेत् ॥ सर्वोपचारान्कृत्वाहिषडंगाद्यतिमर्चयेत् ॥ ३३ ॥ रुक्मि णींसत्यभामांचदक्षवामेप्रपूजयेत् ॥ वासुदेवंसंकर्षणंप्रद्युम्नंचानिरुद्धकं ॥ ३४ ॥ काली दीनाग्नजित्याख्यासुशीलाचसुनंदका ॥ ऋक्षजालक्ष्मणाचैवइत्यष्टौमहिषीःस्मृताः ॥ ३५ ॥

कौमोदकींपांचजन्यंवसुदेवंचदेवकीं ॥ नंदगोपयशोदांचसंपूज्यतदनंतरं ॥ ३६ ॥ किंकिणींचतथाभ्यर्च्यदामादीनथपूजयेत् ॥दिगधीशान्स्वस्वदिक्षुगजानष्टौतथार्चयेत् ॥३७॥ कुमुदःकुमुदाख्यश्चपुंडरिकोऽथवामनः ॥ शंकुकर्णःसर्वनेत्रःसुमुखःसुप्रतिष्ठितः ॥ ३८ ॥ एककालंद्विकालंवात्रिकालंश्रद्धयान्वितः ॥ मंत्रवित्कृष्णमभ्यर्च्यभोगमुक्त्योःसभाजनं॥३९॥ गोष्ठेवाशैलशृंगेवापुण्यारण्येनदीतटे ॥ प्रासादेस्थापयन्कृष्णंतीर्थकोटिफलंलभेत् ॥४०॥ कोटिकोटिमहादानात्कोटितीर्थपरिभ्रमात् ॥ तत्फलंलभतेभक्त्यासंप्रतिष्ठाप्यकेशवं ॥ ॥ ४१ ॥ यद्दामंत्रकोटिजपात्यत्फलंपुरुषोलभेत् ॥ तत्फलंसमवाप्नोतिसंस्थाप्यपुरुषोत्तमं ॥ ४२ ॥ कोटियज्ञेनयत्पुण्यंपुण्यारण्यनिषेवणात् ॥ तत्फलंलभतेमर्त्यस्तद्वत्संस्थाप्यकेशवम् ॥ ४३ ॥ यावज्जन्महरेर्नामग्रहणेयत्फलंभवेत् ॥ तत्फलंसमवाप्नोतिसंस्थाप्यपुरुषोत्तमम् ॥४४॥ कुरुक्षेत्रेसूर्यग्रहेगोदानायुतजंफलम् ॥ तत्फलंलभतेभक्त्यासंस्थाप्यपुरुषोत्तमम् ॥४५॥यद्यसारंगिसंयुक्तःकामःपंचसमन्वितः ॥ मासांतेव्रजनाथायनमोंतोमंत्रईरितः ॥ ४६ ॥ नारदोऽस्यमुनिःप्रोक्तश्छंदोनुष्टुबुदाहृतं ॥ गोवल्लभश्चश्रीकृष्णोदेवतापरिकीर्तितः ॥ ४७॥ पंचांगादिमनोरस्यआचक्रादिनिकल्पयेत् ॥ ध्यायेद्वृंदावनेकृष्णंगोपंशिशुगवावृतं ॥४८ ॥ हस्ताभ्यांवेत्रशृंगंचश्यामलंविश्वमोहनं ॥ बहुरत्नसमाबद्धकिंकिणीहारनूपुरं



॥ ४९ ॥ एवंध्यात्वाजपेन्मंत्रंलक्षमात्रंसमाहितः ॥ होमयेत्तद्दशांशेनपायसैर्मधुरान्वितैः

वृतं ॥४८॥ हस्ताभ्यां [illegible] ॥ [illegible] बद्धांकिकिणीहारनूपुर



॥ ४९ ॥ एवंध्यात्वाजपेन्मंत्रंलक्षमात्रंसमाहितः ॥ होमयेत्तद्दशांशेनपायसैर्मधुरान्वितैः ॥ ५० ॥ अंगेन्द्रवज्रादिसुखैरित्यर्चनाविधिःस्मृतः ॥ यएवंपूजयेन्मंत्रीभक्त्यागोवल्लभंहरिं ॥ ५१ ॥ सगोगणवरैर्युक्तःसर्वैश्वर्यसमृद्धिमान् ॥ देहांतेभगवद्धामप्राप्नुयान्नात्रसंशयः ॥ ५२ ॥ उर्ध्वदंतयुतःस्वांतोतांतेमासहृयंतथा ॥ भीषणामुखवृत्तेनवीतिहोत्रसखान्वितः ॥५३॥ सर्वार्थसाधकःप्रोक्तोनमोंतोऽष्टाक्षरोमनुः ॥ कामबीजंमुखेदद्यात्सर्वार्थानांप्रसाधकः ॥ ५४ ॥ लुप्तबीजाश्चयेमंत्रागोपालस्यक्वचित्क्वचित् ॥ कामबीजंमुखेदद्यात्सर्वकामार्थसिद्धये॥५५॥नारदोऽस्यमुनिःप्रोक्तोगायत्रंछंदईरितं ॥ देवताचश्रीकृष्णोऽस्यसमस्तपुरुषार्थदः ॥ ५६ ॥ पंचांगादिमनोरस्यआचक्राद्यैःप्रकल्पयेत् ॥ कलापकुसुमश्यामंनीलेंदीवरलोचनं ॥ ५७ ॥ नानालंकारसुभगंबालकंपंचहायनं ॥ दध्युत्थंपायसंस्फीतंकराभ्यांदधतंहरिं ॥ ५८ ॥ तारहारावलीरम्यंगोपगोपीगणावृतं ॥ ध्यात्वैवंपरमानंदंसृष्टिस्थित्यंतकारणं ॥ ५९ ॥ अर्कलक्षंजपेन्मंत्रंदशांशंपायसैर्हुनेत् ॥ अथवापंकजैर्हुत्वासिद्धमंत्रोभवेत्सुधीः ॥ ६० ॥ दशाक्षरोदितेपीठेतद्विधानेप्रपूजयेत् ॥ अथचांगेन्द्रवज्राद्यैःपूजाचास्यसमीरिता ॥ ६१ ॥ नवनीतायुतंहुत्वासर्वसिद्धीश्वरोभवेत् ॥ पुन्नागैश्चम्पकैर्होमात्पाटलैराजवश्यता ॥ ६२ ॥ अनाद्यैर्होमतोनित्यंलक्ष्मीस्तस्यगृहेस्थिरा ॥ पूर्वोक्ततर्पणेनैवसर्वा

भीष्टानिसाधयेत् ॥ ६३ ॥ इतिश्रीगौतमीयतन्त्रे सप्तविंशोध्यायः ॥ २७ ॥ ॥ छ ॥
नारद उवाच ॥ कामश्चाष्टस्वरारूढःसर्गवान्मंत्रनायकः ॥ कृष्णेतिद्व्यक्षरःप्रोक्तःकामपू
र्वोगुणाक्षरः ॥ १ ॥ कामाद्यांतश्चतुर्वर्णश्चतुर्वर्गफलप्रदः ॥ ङेंतःकृष्णेनमोंतश्चपंचवर्णो
महामनुः ॥ २ ॥ सएवकामपूर्वश्चेत्षडक्षरमनुःस्मृतः ॥ एवंजप्त्वात्रिकालज्ञःशांताजपंमु
निश्वरः ॥३॥ अस्यसंस्मरणादेवसार्वज्ञंकथितंपरं ॥ लभतेनात्रसंदेहःसत्यंसत्यंहिमद्वचः
॥ ४ ॥ कृष्णगोविंदकौङेंतौकामाद्यष्टाक्षरोमनुः ॥ आद्यंतेकामबीजश्चेन्नवाक्षरमनुःस्मृतः
॥ ५ ॥ सुप्रसन्नात्मनेवन्हिवल्लभाचाष्टवर्णकं ॥ कामबीजंधराबीजंपुनःकामंसमाचरेत्
॥ ६ ॥ श्यामलांगपदंङेंतंनमोंतोऽयंदशाक्षरः ॥ एतेषांमनुवर्याणांनारदोमुनिरीरितः ॥७॥
उक्तंछंदस्तुगायत्रीबालकृष्णोऽस्यदेवता ॥ षड्दीर्घभाजाकामेनषडंगानिसमाचरेत् ॥८॥
नीलपद्मसमानाक्षंबालंश्यामलविग्रहं ॥ नानारत्नसमाबद्धसुवस्त्राभरणान्वितं ॥ ९ ॥ रक्त
पद्मसमासीनंदध्युत्थपायसंवरं ॥ दधतंकरपद्माभ्यांगोपालंशिशुसंवृतं ॥ १० ॥ एवंविचिं
त्यप्रजपेल्लक्षमेकंयथाविधि ॥ अंतेजुहुयाद्विधिवद्दशांशंश्रीफलैर्हुनेत् ॥ ११ ॥ दशाक्षरोदि
तेपीठेविधिनापूजयेद्धरिं ॥ षडंगावृत्तिराद्यास्याद्वितीयादिगधीश्वरैः ॥ १२ ॥ तृतीयातत्प्र
हरणैःसपर्यासर्वकामदा ॥ अयुतंबिल्वपत्रैस्तुहवनाल्लभतेनरः ॥ १३ ॥ तेजोवीर्यैतथाकां



तिलक्ष्मीसर्वातिशायिनी ॥ ... ॥ १४ ॥ बिल्वपत्रैस्त

हरणःसंपर्यासर्वकामदा ॥ अयुतंबिल्वपत्रैस्तुहवनाल्लभतेनरः ॥ १३ ॥ तेजोविर्धितोक

तिलक्ष्मीसर्वातिशायिनी ॥ रक्तपद्मायुतहोमैराजानश्चास्यकिंकराः ॥ १४ ॥ बिल्वपत्रैस्त
थाहुत्वालभेद्राज्यमकंटकं ॥ एतेषांमनुवर्याणामेकंयोभजतेसुधीः ॥१५ ॥ इहभुक्त्वावरा
न्भोगान्देहांतेतत्पदंव्रजेत् ॥ अथापरंमनुवरंवक्ष्येसर्वसमृद्धिदं ॥ १६ ॥ स्मरणाद्यस्यमंत्र
ज्ञोवागीशसमतांव्रजेत् ॥ देवानामिश्वरःशक्रोधनदोधननायकः ॥ १७ ॥ स्मरणाद्यस्यसं
त्रस्यकिल्लसिद्ध्यतिभूतले ॥ वाग्भवंकामबीजंचमायालक्ष्मीमनंतरं ॥ १८ ॥ दशार्णोमनु
वर्यश्चभवेच्छक्ताक्षरोमनुः ॥ वाग्भवाद्योयदाचायंमंत्रीवाक्पतिसन्निभः ॥ १९ ॥ वेदवे
दांगवेदांतसिद्धांतमतिरुज्ज्वलः ॥ अमृतस्यंदिनीवाचःकवितासर्वजित्वरी ॥ २० ॥ सर्व
वाङ्मयवेत्ताचसर्वज्ञोजायतेऽचिरात् ॥ संविदाद्यंयदामंत्रंसाधकोयदिवाभ्यसेत् ॥ २१ ॥
अचिरात्सर्वसिद्धीनामधिपोजायतेसुधीः ॥ राजानोवश्यतांयांतिसामात्यैःसपरिच्छदैः॥२२॥
देवाःसर्वेनमस्यंतिकिंपुनःकथ्यतेपरं ॥ श्रीबीजाद्यंयदाजप्याद्भक्तितोमंत्रनायकं ॥ २३ ॥
अनन्यगारमातस्यमंदिरेसंपदावहा ॥ तस्यवंशोस्थिरालक्ष्मीर्यावदाभूतसंप्लवं ॥ २४ ॥ का
मपुर्वोयदामंत्रोजप्यतेसाधकोत्तमैः ॥ त्रैलोक्यंवश्यतामेतिमनोवाक्कायकर्माभिः ॥ २५ ॥
स्त्रीणांकंदर्पसदृशोदर्शनादेवमोहकृत् ॥ चमत्कारकरोलोकेजीवेद्वर्षशतंसुखी ॥ २६ ॥
ऋषिर्ब्रह्मास्यमंत्रस्यगायत्रीछंदईरितं ॥ देवतासर्वजगतांमोहनःकृष्णईरिता ॥ २७ ॥

पंचागानिमनोरस्यआचक्राद्यैःप्रकल्पयेत्॥सृष्टिसंहारास्थितिभिर्दशवर्णान्करेन्यसेत्॥२८॥ तारसंपुटितान्कृत्वानमोमध्यगतान्मुने ॥ दशवर्णान्यसेत्स्थानेदशवर्णविधानतः ॥ २९ ॥ केशवादितथातत्वंदशतत्वंक्रमात्क्रमात् ॥ ऋष्यादिन्यासमासाद्यपंचांगंन्यासमाचरेत् ॥ ३० ॥ कामाक्षरंपरंबीजंस्वाहाप्रकृतिरीश्वरी ॥ केवलंचित्कलाशक्तिर्मंत्राधिष्ठातृदेवता ॥ ३१ ॥ ध्यायेद्वृंदावनेरम्येकांचनीभूमिमध्यगे ॥ नानापुष्पलताकीर्णेवृक्षखंडैश्चमंडिते ॥ ३२ ॥ कल्पाटवीतलेसम्यक्श्रीमन्माणिक्यमंडपे ॥ देवकिंनरगंधर्वमुनिभिःपरिसेविते ॥ ३३ ॥ नारदाद्यैर्मुनिश्रेष्ठैःस्तुतिभिःसमुपस्थिते ॥ रत्नसिंव्हासनेध्यायेदुपविष्टंपंकजोपरि ॥ ३४ ॥ सजलजलदश्यामंरक्तपद्मनिभेक्षणं ॥ रत्नपद्मनिभंश्रीमत्पाणिपादैःसुमंडितं ॥ ३५ ॥ नवरत्नसमाबद्धंभूषणैःपरिसेवितं ॥ आभुक्तवक्षसंश्रीमत्कौस्तुभेनसुवाससं ॥ ३६ ॥ तारहारावलीरम्यंश्रीवत्सांकितवक्षसं ॥ रोचनातिलकप्रांतेकुंतलालिसमावृतं ॥३७॥ कंदर्पचापसदृशंचिल्लीमालाविराजितं ॥ अनेकरत्नसंनद्धस्फुरन्मकरकुंडलं॥ ३८ ॥ बर्हिबर्हकृतोत्तंसंसर्वज्ञंसर्ववेदिभिः ॥ उपासितंमुनिगणैरुपतिष्ठेद्धरिंसुधीः॥ ३९ ॥ एवंध्यात्वामनुवरंदशलक्षंव्रतेस्थितः ॥ दशाक्षरीविधानेनजपेत्सिद्धोभवेन्मनुः ॥ ४० ॥ सिद्धेनानेनमनुनासर्वाभिष्टानिसाधयेत् ॥ दशाक्षरोदितेपीठेतद्विधानेनपूजयेत् ॥ ४१ ॥

सिद्धनानेनमनुनासर्वा [illegible] ॥ [illegible] नपूजयेत् ॥ ४१ ॥



अयुतंजुहुयान्मंत्रीकुसुमैर्ब्रह्मवृक्षजैः ॥ महाकविर्महाविज्ञोभवेन्मंत्रीनसंशयः ॥ ४२ ॥ मालतीकुसुमैर्होमाद्वाक्सिद्धिमतुलांलभेत् ॥तगरैर्क्षीरसिक्तैश्चहोमात्सर्वज्ञतांव्रजेत् ॥४३॥ बकुलकुसुमैर्होमाच्छ्रियमाप्नोतियथेप्सिताम् ॥ भक्ष्यभोज्यादिहोमेनसम्प्राद्धिमतुलांलभेत्॥ ४४ ॥ केवलंघृतहोमेनब्राह्मंतेजःप्रजायते ॥ श्रीफलस्यदलैर्हुत्वाराज्यमाप्नोत्ययत्नतः ॥ ४५ ॥ तत्फलैर्मंत्रसिद्धिःस्यात्दुर्वाभिरयुतंहुनेत् ॥ तर्पणंपूर्वविहितंकृत्वासर्वंप्रसाधयेत् ॥ ४६ ॥ दशाक्षरोक्तवत्सर्वंप्रयोगममुनाचरेत् ॥ अथापरंप्रवक्ष्यामिमंत्रंसर्वार्थसाधकं ॥ ४७ ॥ कृष्णेतिद्व्यक्षरंमंत्रंमध्यस्थंकामबीजयोः ॥ सद्यःफलप्रदंमंत्रंप्रजपेद्भक्तितत्परः ॥ ४८ ॥ अस्याराधनतःशक्रोदेवेशत्वमवाप्तवान् ॥ ऋषिर्ब्रह्मास्यमंत्रस्यगायत्रंछंदईरितं ॥ ४९ ॥ एवमंगविधिंकृत्वामंत्रीध्यायेद्यथाच्युतं ॥ कलापकुसुमश्यामंद्रुतहेमनिभाम्बरं ॥ ५० ॥ पारिजातवनेरम्येरत्नसिंहासनोपरि ॥ देहोत्थसुप्रभाभिश्चभासयंतंदिगंतरं ॥ ५१॥ शिशुवेषधरंदेवंवासुदेवंजगन्मयं ॥ नानालंकारसुभगंगोपीभिःपरिवीक्षितं ॥५२॥कल्पवृक्षविनिष्क्रांतरत्नाद्यैःपरिवेष्टितं ॥ तारहारावलीरम्यंपीतांबरयुगावृतं ॥५३॥ चतुर्लक्षंजपेन्मंत्रंव्रतस्थःसाधकोत्तमः ॥ दशांशंजुहुयादंतेश्रीफलैःसर्वसिद्धये ॥५४॥ अष्टच्छदांबुजेदेवमावाह्यपरिपूजयेत् ॥ अंगषट्कावृतेरंतेपूजयेद्दिगधीश्वरान् ॥५५॥ तदस्त्राण्यपिचांतेचसपर्यै

षसमीरिता ॥ नवनीतायुतंहुत्वाश्रियमाप्नोत्यनिंदितां ॥ ५६॥ श्रीफलायुतहोमेनराज्यामि
र्मंत्रिणोभवेत् ॥धान्यमंजरीभिर्हुत्वाधान्यवान्जायतेऽचिरात्॥५७॥अन्नवानन्नहोमेनघृतहो
माच्छ्रियंलभेत् ॥ वासनाहोममात्रेणज्ञानचंद्रःप्रकाशते॥५८॥यएवंभजतेमंत्रीजपहोमादित
त्परः॥सतुसम्यक्श्रियंलब्ध्वादेहांतेतत्पदंव्रजेत्॥५९॥चूडामणिमथोवक्ष्येमंत्रराजंसुदुर्लभं॥
यज्ज्ञानान्मुनयःसर्वेभूस्थास्त्रैलोक्यदर्शिनः ॥ ६० ॥ चतुर्वर्णस्यमंत्रस्यकामाद्यावान्हियोग
तः ॥ अयंशिखामणिःप्रोक्तःत्रैलोक्यदर्शनक्षमः ॥६१ ॥ नारदोऽस्यऋषिःप्रोक्तोविराट्छंद
उदाहृतं ॥ देवताश्रीकृष्णोऽस्यमुनिभिःपरिकीर्तितः ॥ ६२ ॥ षड्दीर्घयुक्तबीजेनकामेनां
गक्रियामता ॥ मंत्रसंपुटितंकृत्वावर्णन्यासंतथाचरेत् ॥ ६३ ॥ दशतत्वंततोन्यस्यकरांग
न्यासमाचरेत् ॥ वृंदावनगतंध्यायेत्कल्पकोद्यानमध्यगं ॥ ६४ ॥ दोलायमानंगोपीभिः
सुवर्णदोलिकांगतं ॥ सूर्यायुतसमाभासंलसन्मकरकुंडलं ॥ ६५ ॥ नानारत्नपरिभ्राजन्ना
नालंकारमंडितं ॥ पंचवर्षावधिबालंकुंतलोद्भासिसन्मुखं ॥ ६६ ॥ हसितोदारकांत्याचभा
सयंतंदिगंतरं ॥ इतिध्यात्वाचतुर्लक्षंजपेन्मत्राशिखामणिं ॥ ६७ ॥ तद्दशांशेनजुहुयात्पा
यसैरथवांबुजैः ॥ अंगेन्द्रवज्राद्यावृतिभिस्त्रिभिःपूजनमीरितम् ॥६८॥ ब्रह्मवृक्षोत्थकुसुमैर्हुने
दयुतमादरात् ॥ त्रिकालज्ञोभवेन्मंत्रीनवनीतहुतादपि ॥ ६९ ॥ श्रीफलस्यफलैर्होमाद्रा



ज्यमाप्नोत्यसंशयः ॥ लक्ष्मीपुष्पहुतान्मंत्रीबहुलक्ष्मीमवाप्नुयात् ॥ ७० ॥ मूलत्रिकोणम

दयुतमादरात् ॥ त्रि[illegible] ॥ ६९ ॥ श्रीफलस्यफलहोमाद्रा



ज्यमाप्नोत्यसंशयः ॥ लक्ष्मीपुष्पहुतान्मंत्रीबहुलक्ष्मीमवाप्नुयात् ॥ ७० ॥ मूलत्रिकोणम
ध्येतुज्योतीरूपंविचिंतयेत् ॥ लक्षजपान्मनोरस्यत्रिकालज्ञोभवेद्ध्रुवं ॥ ७१ ॥ करस्था
मलकन्यायाद्विश्ववृतंचपश्यति ॥ हृदिस्थितंहरिंकृत्वासर्वंपश्यतिचक्षुषा ॥ ७२ ॥ रविवा
रेऽश्वत्थमूलेशतमष्टोत्तरंजपेत् ॥ एवंचनियतंकृत्वाम्रियतेनापमृत्युतः ॥ ७३ ॥
वसँस्तत्रलक्षजपात्सर्वज्ञोजायतेऽचिरात् ॥ ७४ ॥ इतिश्रीगौतमीयतन्त्रे अष्टाविंशति
तमोऽध्यायः ॥ २८ ॥ ॥ छ छ छ छ

गौतम उवाच ॥ एकाक्षरंमनुवरंविष्णोस्त्रैलोक्यमोहनं॥ श्रवणेयदियोग्योऽस्मिमुनेब्रूहिचत
त्वतः ॥ १ ॥ नारद उवाच ॥ समस्तकृष्णमंत्राणामुद्दीपनकरंपर ॥ केवलंत्वत्प्रसादेन
कथयामिमुनेशृणु ॥ २ ॥ कामाक्षरंधरासंस्थंशक्तिबिन्दुविभूषितम् ॥ त्रैलोक्यमोहनंबी
जंकथितंतवयत्नतः ॥ ३ ॥ आनंदनारदश्चास्यऋषिश्छंदोविराडपि ॥ त्रैलोक्यमोहनःप्रो
क्तोदेवताविष्णुरीरितः ॥ ४ ॥ सर्वेषुकृष्णमंत्रेषुमंत्रोऽयंमंत्रनायकः ॥ सृष्टिस्थितिदशतत्वं
मातृकांमनुसंपुटां ॥ ५ ॥ षट्दीर्घभाजाबीजेनन्यासःकरांगयोरपि ॥ मूर्ध्निभालेहृदिगुह्ये
पादयोश्चयथाक्रमं ॥६॥ पंचबाणस्यबीजानिन्यसेद्ध्यायेद्यथाच्युतं ॥ थांतोरेफसमारूढो
अनंतशांतिभूषितौ ॥ ७ ॥ बिंदुनादकलायुक्तौबीजौत्रैलोक्यमोहनौ ॥ कामबीजंततःप

श्वाज्जलंधराप्तमन्वितं ॥ ८ ॥ पंचमस्वरसंयुक्तंबिंदुनादसमान्वितं ॥ बीजान्येतानिचांतेच चन्द्रःसर्गसमन्वितः ॥ ९ ॥ शोषणमोहनंसदीपनोन्मादनस्तथा ॥ नामानुरूपफलदा निश्चिताविद्धिगौतम ॥ १० ॥ भंगविद्रुमसंकाशंसर्वतेजोमयंवपुः ॥ किरीटिनंकुंडलिनंके यूरवलयान्वितं ॥ ११ ॥ मुक्तावलीरत्नसंबद्धतुलाकोटिगुणान्वितं ॥ नानालंकारसुभगं पीतांबरयुगावृतं ॥ १२ ॥ गरुडोपरिसंनद्धंरत्नपंकजमध्यगं ॥ उत्तप्तहेमसंकाशंलक्ष्मींवा मोरुसंस्थितां ॥१३॥ सर्वालंकारसुभगांपीतांबरयुगावृतां ॥ सकामलीलयादेवंमोहयंतींपुनः पुनः ॥ १४ ॥ शंखचक्रगदापद्मपाशांकुशधनुःशरान् ॥ दधंतंचजगन्नाथंरक्तपद्मारुणेक्ष णं ॥१५॥ लक्ष्मींपद्मकरांवामेदक्षिणालिंगितंपतिं ॥ संस्थितांचिंतयेन्मंत्रीमोहनींविश्वमा तरं ॥ १६ ॥ एवंध्यात्वाजगन्नाथंविंशत्यक्षरपीठके ॥ समावाह्यजपेन्मंत्रीउपचारैरशेष तः ॥ १७ ॥ न्यासक्रमेणविधिवद्गंधपुष्पादिभिर्यजेत् लक्ष्मींस्तुल्याततःपूज्याश्रीबीजेनवि धानवित् ॥ १८ ॥ कौस्तुभंगलदेशेचकिरीटंकुंडलद्वयं ॥ श्रीवत्संवक्षसोदेशेवनमालांग लोपरि ॥ १९ ॥ सर्वतेजोमयायेतिकिरीटायनमस्तथा ॥ नितंबेपीतवसनंपूजयेत्क्रमशः सुधीः ॥२०॥ नाममंत्रेणविधिवत्कौस्तुभादीन्प्रपूजयेत् ॥ लयांगमेवमभ्यर्च्यभोगांगमथ पूजयेत् ॥ २१ ॥ पक्षीन्द्रमग्रेसंपूज्यकुर्वंतंस्तुतिमादरात् ॥ केसरेषुषडंगानिकोणमध्येच



दिक्षच ॥२२॥ अग्न्यादिदलमूलेचबाणादिपरतोविभोः ॥ पूर्वादिदिक्षुदलाग्रेषुप्रदक्षिणक्र

पूजयेत् ॥ २१ ॥ [illegible] षडंगानिकोणमध्यच



दिक्षुच ॥२२॥ अग्न्यादिदलमूलेचबाणादिपुरतोविभोः ॥ पूर्वादिदिक्षुदलाग्रेषुप्रदक्षिणक्र
माद्यजेत् ॥ २३ ॥ लक्ष्मींसरस्वतींचैवरतिंप्रीतिमनंतरं ॥ कीर्तिंकांतिंतुष्टिंपुष्टिंतथास्त्रा
णिदलाग्रतः ॥ २४ ॥ वन्हिरिन्द्रादयःपूज्यास्तदस्त्राणिचतद्बहिः ॥ एवंयःपूजयेन्मंत्रीभ
क्त्याश्रीपुरुषोत्तमं ॥ २५ ॥ करप्रचेयाःसर्वार्थास्तस्यस्युस्तत्पदंव्रजेत् ॥ रविलक्षंजपेन्म
त्रंजुहुयात्तद्दशांशतः ॥ २६ ॥ अमृतत्रयसिक्तेनपायसेनविधानवित् ॥ अथवारविसाहस्रं
हुनेत्तावत्प्रतर्पयेत् ॥ २७ ॥ रक्तपद्मायुतंहुत्वात्रैलोक्यंवशमानयेत् ॥ केवलंघृतहोमेन
जीवेद्वर्षशतंसुखी ॥ २८ ॥ पालाशलक्षहोमेनभवेद्वाक्पतिसन्निभः ॥ व्रतस्थकोटिजा
पेनकैवल्यंलभतेध्रुवं ॥ २९ ॥ दशाष्टादशवर्णोक्तंकर्मचानेनसाधयेत् ॥ अनेनसदृशोमंत्रः
कृष्णमंत्रेनविद्यते ॥ ३० ॥ असौसमस्तमंत्राणांजीवनंकथितंमुने ॥ निर्बीजायेचमंत्रावैशक्ति
हीनाश्चकुंठिताः ॥ ३१ ॥ अरिपक्षेस्थितायेचकेवलावर्णरूपिणः ॥ एतदाद्येनजाप्येनजीवं
तिचपुनंतिच ॥ ३२ ॥ हृषीकेशपदंङेन्तंनमोंतःकामपूर्वकः ॥ अष्टाक्षरोमनुःप्रोक्तःसमस्त
पुरुषार्थदः ॥ ३३ ॥ ऋषिछंदोदैवतानिपूजाप्रयोगकर्मच ॥ एकाक्षरविष्णुवच्चकुर्यात्स
र्वार्थसिद्धये ॥ ३४ ॥ त्रैलोक्यमोहनंङेन्तंविद्महेतदनंतरं ॥ कामदेवायधीमाहितन्नोविष्णुःप्र
चोदयात् ॥ ३५ ॥ कथिताविष्णुगायत्रीसमस्तजनरंजनी ॥ कामादिजपमात्रेणत्रैलोक्य

वश्यकारिणी ॥ ३६ ॥ सर्वपापप्रशमनीसर्वापत्परिमोचनी ॥ मंत्रसिद्धिकरीपुसांप्रायश्चित्त
विशोधिनी ॥ ३७ ॥ इतिश्रीगौतमीयतन्त्रे नवविंशोऽध्यायः ॥ २९ ॥ ॥ छ ॥
नारद उवाच ॥ अथापरंमन्त्रवरंवक्ष्येसर्वसमृद्धिदं ॥ यमुपास्यसुराणांतुपालकोभूच्छतक्रतुः
॥ १ ॥ सत्यसौरीछांतजांतौक्रमेणशिखिसंयुताः ॥ शांतिबिंदुसमारूढाःप्रोक्तंबीजचतुष्ट
यं ॥ २ ॥ जयकृष्णाद्द्विधाप्रोक्त्वानित्यांतेक्रीडासंसक्तंततः ॥ प्रमुदितचेतसेनृत्यप्रियप्रोक्तं
वैकृष्णङेन्तंततोवदेत्कामांतेदशवर्णकः ॥३॥ वाङ्मायाकमलाबीजैःसंपुटोमंत्रनायकः ॥ स
र्वेषांकृष्णमंत्राणामयंमंत्रःशिखामणिः ॥ ४ ॥ धमार्थकाममोक्षाणामालयःसंप्रदायतः ॥ सं
प्रदायविहीनायेमंत्रास्तेनिष्फलामताः ॥५॥ आनंदनारदऋषिर्विराट्छंदउदीरितं॥ श्रीकृष्णो
देवताचभुक्तिमुक्तिफलप्रदः ॥ ६ ॥ पदषट्केनमतिमान्बीजाद्येनांगकल्पना ॥ पूर्ववन्न्यास
जालंचकृत्वाकरांगशोधनं॥७॥ततश्चविधिवन्न्यसेन्मातृकांमनुसंपुटां ॥ ऋषिछंदोदैवतानि
मूर्ध्निमुखेहृदिन्यसेत् ॥ ८ ॥ ध्यायेत्स्थिरमनामंत्रीचराचरगुरुंहरिं ॥ क्षीरांभोनिधिमध्य
स्थकनकाचलमध्यतः ॥ ९ ॥ ध्यायेत्स्वर्णमयींभूमितन्मध्येरत्नमंडपं ॥ अनेकयोजनोत्तुं
गविस्तीर्णबहुयोजनं ॥ १० ॥ नानारत्नमयस्तंभमुक्तादामविराजितं ॥ लसत्फेननिभैर्वस्त्रै
श्चंद्रातपविचित्रितं ॥११॥ हंसकारंडवाकीर्णपंकजोत्पलशोभितम् ॥ मंडितंदीर्घिकशतैर्म



हावाटीपरिष्कृते ॥ १२ ॥ ... ॥ तत्ररत्नासनेरम्येसंस्थि

हावाटीपरिष्कृते ॥ १२ ॥ स्वर्णप्राकारनिर्वृत्तेरत्नतोरणचित्रिते ॥ तत्ररत्नासनेरम्येसंस्थि तंपरमेश्वरं ॥१३॥ रुक्मिणीसत्यभामाचपार्श्वयोर्धृतचामरे ॥ नानालंकारसुभगेवीजतःप रयासुदा ॥ १४ ॥ कालिंदीऋक्षतनयेपृष्ठतोधृतबर्हके ॥ महामेघप्रभाश्याममंपद्मपत्रारुणेक्ष णं ॥१५॥ पीतांबरलसच्छ्रीमत्श्रीवत्सकौस्तुभान्वितं ॥ नानालंकारसुभगंतारहारविराजि तम् ॥ १६ ॥ दीप्तरत्नकिरीटंचस्फुरन्मकरकुंडलं ॥ गोरोचनाभालतिलकंनीलकुंतल शोभितं ॥ १७ ॥ नारदाद्यैर्मुनिगणैरावृतंस्निग्धलोचनैः ॥ हृष्टपुष्टजनाकीर्णनगरैर्बहुवि स्तरैः ॥ १८ ॥ सौधैर्गृहैःसमुत्कीर्णपताकैःपरिमंडितैः ॥ ब्रह्मक्षत्रविट्शूद्रैश्चाकीर्णरथप त्तिभिः ॥ १९ ॥ रथवाजिद्विपवरैःसर्वतःपरिमंडितैः ॥ कामिनीभिःसुभव्याभिःसर्वतःपरि मंडितं ॥२०॥ नानाविचित्ररत्नैश्चमंडिताभिःसमन्वितं ॥ एवंध्यात्वामुनिश्रेष्ठलक्षमेकंज पेन्मनुम् ॥२१॥ बैल्वैःफलैस्त्रिमध्वाक्तैर्जुहुयात्तद्दशांशकं ॥ तर्पयेत्तद्दशांशेनतद्दशांशेनमा र्जनम् ॥ २२ ॥ तद्दशांशेनमंत्रज्ञोविप्रमुख्यान्प्रतर्पयेत् ॥ रत्नाभिषेकगोपालपीठेदेवंप्रपू जयेत् ॥ २३ ॥ षडंगावृत्तिबाह्येतुमहिषीपत्रगायजेत् ॥ रुक्मिण्याद्यामहारत्नभूषिताक्ष तयःशुभाः ॥ २४ ॥ तद्बहिरिंद्रवज्राद्याजात्याधिपास्त्रवाहनं ॥ यएवमर्चनंकृत्वासिद्धमंत्रो द्विजोत्तमः ॥ २५ ॥ प्रयोगान्साधयेद्यस्तुकर्ताहर्ताचसर्वतः ॥ श्रीपुष्पैर्लक्षमात्रेणमोहाद्भू

सिपुरन्दरः ॥ २६ ॥ पालाशैर्लक्षमात्रेणहोमाद्गोशतांव्रजेत् ॥ हयारिरक्तकुसुमैर्जगद्वंज
नकारकः ॥ २७ ॥ केवलंघृतहोमेनजीवेद्वर्षशतंसुखी ॥ अन्नहोमेनधनवान्पशुमान्दुग्ध
होमतः॥२८॥कारस्करफलैर्होमाच्छत्रुमुच्चाटयेत्क्षणात् ॥ मरीचहोमात्त्वरितंमारयेद्रिपुमात्म
नः ॥ २९ ॥ पुंडरीकायुतंहुत्वामुच्यतेसर्वपातकैः ॥ तल्लक्षमात्रहोमेनराज्यैश्वर्यमवाप्नुया
त् ॥ ३० ॥ आत्मानंकंसमथनंरिपुंकंसात्मकंस्मरन् ॥ दक्षिणाभिमुखोभूत्वादशसाहस्र
जापतः ॥ ३१ ॥ क्रुद्धाशयस्तथामंत्रीमलिनोमारयेद्रिपुं ॥ अप्यमृताशनोनित्यंशत्रुर्वैवस्व
तातिथिः ॥ ३२ ॥ तस्यमंत्रात्सकृत्कश्चिन्नास्त्येवभुवनत्रये ॥ नशस्तंमारणंकर्मयदिस्याद्वै
ष्णवेमनौ ॥ ३३ ॥ ब्रह्मन्ब्रह्मास्त्रमादायशशाकादौनमोचयेत् ॥ नायंमुक्तिकरोमंत्रोमारणा
दौनियोजयेत् ॥ ३४ ॥ यदिकुर्यात्प्रमादेनएषुस्थानेषुसंभवेत् ॥ पापिनेहैतुकायापिशठा
यजनतापिने ॥ ३५ ॥ आत्मवित्तगृहक्षेत्रकलत्राद्यपहारिणे ॥ अभिचारेणाभिचरेत्तदादो
षैर्नलिप्यते ॥ ३६ ॥ दुष्टानांदमनंशस्तंकथितंत्वायिगौतम ॥ अतःस्वयंप्रयत्नेनतदुत्थानं
विनिग्रहे ॥ ३७ ॥ लक्षमेकंजपेन्मत्रंप्रायश्चित्तायदेशिकः ॥ तेनपापैर्विमुक्तोऽसौभवेत्क
ल्याणसंयुतः ॥ ३८ ॥ साध्यंसंहृत्यकृत्याचसाधकंभोक्तुमिच्छति ॥ तेनात्मानंसदारक्षेत्कृ
त्येनानेनदेशिकः ॥ ३९ ॥ मृत्युंजयंवाप्रजपेमन्त्रादौगुरुवक्त्रतः ॥ सर्वत्रकर्माणिपरंगुरुरेव



हिकारणं ॥ ४० ॥ गरेरिनङ्गामादायसर्वकर्माणिसाधयेत् ॥ अथशृणुप्रवक्ष्यामिमंत्रंश्रीपु

त्येनानेनदेशिकः ॥ ३९ ॥  सर्वेनकर्माणिपरगुरुरेव

हिकारणं ॥ ४० ॥ गुरोरनुज्ञामादायसर्वकर्माणिसाधयेत् ॥ अथशृणुप्रवक्ष्यामिमंत्रंश्रीपुरुषोत्तमं ॥ ४१ ॥ यज्ज्ञानात्साधकवरोभक्तिमुक्त्योश्वभाजनम् ॥ समस्तसिद्धिसंयुक्तो जीवन्मुक्तोमहींचरेत् ॥ ४२ ॥ देहांतेकेवलंधामयातितत्परमंपदम् ॥ सर्वेषुकृष्णमंत्रेषुश्रेष्ठःश्रीपुरुषोत्तमः ॥ ४३ ॥ भुक्तिमुक्तिकरःसाक्षात्स्मरणादेववैनृणां ॥ प्रणवंमारबीजंचरमांतेनमइत्यथ ॥ ४४ ॥ पुरुषोत्तमपदंचोक्त्वातथाप्रतिहतरूपतः ॥ ततोलक्ष्मीनिवासांते केवलांतेजगत्तथा ॥ ४५ ॥ क्षोभणेतिपदंचोक्त्वासमाहितमनाभवेत् ॥ सर्वस्त्रीहृदयोपेतंविदारणपदंतथा ॥ ४६ ॥ उक्त्वाततस्त्रिभुवनमहोन्मादकरौपुनः ॥ सुरासुरांतेमनुजसुंदरीजनवल्लभ ॥ ४७ ॥ मनांसितापयद्वंद्वंदीपयद्वितयंपुनः ॥ शोषयद्वितयंभूयोमारयद्वितयंपरम् ॥ ४८ ॥ स्तंभयद्वितयंपश्चान्मोहयाद्वितयंपुनः ॥ द्रावयद्वितयंपश्चादाकर्षययुगंततः ॥४९॥ समस्तपरमोपेतसुभगेनचसंयुतं ॥ सर्वसौभाग्यशब्दांतेकरेतिपदसंयुतं ॥५०॥ सर्वकामप्रदपदंअमुकंहनयुग्मकं ॥ चक्रेणगदयापश्चात्खड्गेनतदनंतरं ॥ ५१ ॥ सर्वबाणैर्भिंदियुगंपाशेनेतिपदंततः ॥ कटद्वयांतेंऽकुशेनताडयद्वितयंपुनः ॥ ५२ ॥ तुरुशब्दद्वयमथोकिंतिष्ठसिपदंपुनः ॥ तावद्यावत्पदस्यांतेसमीहीतमनंतरं ॥ ५३ ॥ ततोमेसिद्धिमाभाव्यभवत्वंतेचवर्मफट् ॥ नत्यन्तोऽयंमनुःप्रोक्तोद्विशताक्षरसंयुतः ॥ ५४ ॥ जैमिनिर्मुनिरा

ख्यातच्छंदोविराट्समीरितम् ॥ समस्तजगतामादिदेवतापुरुषोत्तमः ॥ ५५ ॥ पुरुषोत्तम शब्दांतेवदेत्रिभुवनंततः ॥ मदोन्मादकरांतेचहृदयंसकलंततः ॥ ५६ ॥ जगत्क्षोभणशब्दांतेलक्ष्मीपदमपिहुंशिरः ॥ मन्मथोत्तमसंयुक्तमंगजेकामदायिनी ॥५७॥ हुंशिखापरमोपेता सुभगाक्षरसंयुतं ॥ सर्वसौभाग्यकरहुंकवचंपरिकीर्तितं ॥ ५८ ॥ उक्त्वासुरासुरोपेतमनुजान्वितसुंदरी ॥ ततःपरस्तात्हृदयविदारणपदंवदेत् ॥ ५९ ॥ सर्वप्रहरणधरंसर्वकामिकतत्परं ॥ हनहृयंचहृदयबंधनानिततःपरं ॥ ६० ॥ आकर्षयपदद्वंद्वंमहाबलहुमस्त्रकं ॥ त्रिभुवनेश्वरपदंचोक्त्वाततःसर्वजनांतकं ॥६१॥ मनांसिहरयुग्मंतेदारयद्वितयंचमे ॥ वशमानयहुंनेत्रंताराद्याःफट्नमोंतकाः ॥ ६२ ॥ षडंगमंत्राःसंदिष्टानेत्रांतामंत्रवादिभिः ॥ त्रैलोक्यमोहनांतेतुहृषीकेशपदंततः ॥ ६३ ॥ अप्रातिहतरूपादिमन्मथानंतरंपुनः ॥ सर्वादिस्त्रीपदंचोक्त्वाहृदयाकर्षणंततः ॥६४॥ आगछागछमंत्रोऽयंताराद्योनमसान्वितः ॥ अनेनमनुनाकृत्वान्यापकंन्यस्यबाहुषु ॥६५॥ अष्टायुधानिमुद्राभिर्मंत्रैःसार्द्धंविचिंतयेत् ॥ क्षीरांभोनिधिमध्यस्थंनिरंतरसुरद्रुमं ॥ ६६ ॥ उद्यदर्केंदुकिरणंदूरीकृततमोमयं ॥ कालमेघसमालोकनृत्यद्बार्हिकदंबकं ॥ ६७॥ उत्फुल्लकुसुमामोदप्रहृष्यद्भृंगसंकुलं ॥ कुजत्कोकिलसंघेनवाचालितदिगंतरं ॥ ६८ ॥ नानाकुसुमसौरभ्यवाहिगंधवहान्वितं ॥ कल्पवल्लीनिकुंजेषुक्रीड



त्सिद्धकदंबकं ॥ ६९ ॥ देवगंधर्वनारीभिर्मंगलीगिरलंकृतं ॥ अनेकदीर्घिकायुक्तमुद्यानं

त्सिद्धकदंबकं ॥ ६९ ॥ देवगंधर्वनारीभिर्गायंतीभिरलंकृतं ॥ अनेकदीर्घिकायुक्तमुद्यानं सुमहाद्भुतं ॥ ७० ॥ तस्यमध्येमणिमयेमंडपेतोरणान्विते ॥ ऋतुभिःषड्भिरनिशंसेवितंच महीयसम् ॥ ७१ ॥ सुरद्रुमस्यमूलस्थेमहासिंहासनेशुभे ॥ रक्तारविंदमध्यस्थंगरुडोपरि संस्थितं ॥ ७२ ॥ ध्यायेद्वल्लभयासार्द्धंजगन्नाथंजगन्मयं ॥ देवंश्रीपुरुषोत्तमंकमलयास्वां कस्थयापंकजं । बिभ्रन्त्यापरिरब्धुमंबुजरुचातस्यांनिरुद्धेक्षणं ॥ ध्यायेच्चेतसिशंखपाशमुसलांश्चापारिखड्गान्गदां । हस्तैरंकुशमुद्वहंतमरुणंस्मेरारविंदाननम् ॥ ७३ ॥ एवंध्यात्वाश्रियः कांतंमंत्रंलक्षचतुष्टयं ॥ जपेद्दशीविधायाथकुंडमर्द्धेंदुसन्निभम् ॥ ७४ ॥ जुहुयाद्वैष्णवेव न्हौपद्मैर्जातिसमुद्भवैः ॥ पुष्पैःसर्वैःक्रमात्पश्चाद्ब्राह्मणानपिभोजयेत् ॥ ७५ ॥ अर्चयिष्यन्जगन्नाथंगायत्र्यापरिशोधयेत् ॥ आत्मानंयागवस्तूनियागभूमिंचदेशिकः ॥ ७६ ॥ त्रैलोक्यमोहनायेतिविद्महेपदमीरयेत् ॥ स्मरायधीमहिपश्चात्तन्नोविष्णुःप्रचोदयात् ॥ ७७ ॥ गायत्र्येषासमाख्यातावैष्णवीसर्वसिद्धिदा ॥ प्राक्प्रोक्तवैष्णवेपीठेकल्पयेदासनंततः ॥७८॥ पक्षिराजायठद्वंद्वमस्यमंत्रःप्रकीर्तितः ॥ कल्पितायांतुमूलेनमूर्तौदेवमनन्यधीः ॥ ७९ ॥ आवाह्यमनुनाविद्वान्व्यापकेनसमर्चयेत् ॥ भृगुर्लीतयुतःसेन्दुर्बीजंदेव्याःप्रकीर्तितम् ॥ ८० ॥ कर्णिकायांयजेदादौविधानेनांगदेवताः ॥ दलमूलेषुताःपूज्यालक्ष्म्याद्याधृतचामराः ॥ ८१ ॥

मुक्ताहारलसत्कांतपयोधरभरालसाः ॥ यवाकुसुमसंकाशामदविभ्रममंथराः ॥ ८२ ॥ हुंस्व त्रयंक्लींविसर्गरहितस्वरशोभितं ॥ देवीबीजंक्रमादासांमंत्रमाहुर्मनीषिणः ॥ ८३ ॥ दलाग्रे षुयजेच्छंखंशार्ङ्गंचक्रमसिंगदां ॥ अंकुशंमुसलंपाशंएतान्यस्त्राणिशार्ङ्गिणः ॥ ८४ ॥ स्वमु द्राभिःस्वमनुभिःकथ्यंतेमनवःक्रमात् ॥ आद्येजलचरायांतेठद्वयंमनुरीरितः ॥ ८५ ॥ शा र्ङ्गायसशरायांतेस्वाहांतःपरमोमनुः ॥ सुदर्शनमहाचक्रराजांतेस्याद्दहद्वयं ॥ ८६ ॥ सर्वदुष्ट जयंपश्चात्कुरुछिंधियुगंपृथक् ॥ विदारयपदद्वंद्वंपरमंत्रात्ग्रसग्रस ॥ ८७ ॥ भक्षयद्रावयद्वंद्वं प्रत्येकंवर्मफट्द्वयं ॥ चक्रायनमइत्येषतृतीयमनुरीरितः ॥ ८८ ॥ खड्गतीक्ष्णपदस्यांतेछिं धिखड्गयुगंपृथक् ॥ चतुर्थोऽयंमनुःप्रोक्तःकौमोदकिमहाबले ॥ ८९ ॥ सर्वासुरांतकेपदंप्रसी दयुगवर्मफट् ॥ स्वाहांतोऽयंमनुःप्रोक्तःसाद्भिःकौमोदकीपरः ॥ ९० ॥ अंकुशांतकठयुगंष ष्ठोऽयंमनुरीरितः ॥ संवर्तकांतेमुसलपोथयद्वितयंपुनः ॥ ९१ ॥ हुंफट्द्विठांतमंत्रोऽयंसप्तमःप रिकीर्तितः ॥ पाशबंधद्वयंपश्चादाकर्षयपदद्वयं ॥ ९२ ॥ वह्निजायावधिःसद्भिरष्टमोमनुरी रितः ॥ लोकेशान्पूजयेत्पश्चाद्वज्राद्यैश्चायुधैःसह ॥ ९३ ॥ इत्थमभ्यर्चयन्नित्यंयथावत्पुरु षोत्तमं ॥ प्राप्नोतिमहतींलक्ष्मींसौभाग्यमतुलंयशः ॥ ९४ ॥ आयुरारोग्यमन्यानिमनोभी ष्टानिविंदति ॥ हयारिकुसुमैर्देवमर्चयित्वायथाविधि ॥ ९५ ॥ शशिप्रसूनैर्जुहुयादष्टोत्तरस



हस्रकं ॥ मासमात्रेणवशगा[illegible] ॥ ९६ ॥ हुत्वाबिल्वफलैःपक्कैःश्रियंवि

हस्रकं ॥ मासमात्रेणवशगास्तस्यस्युःसकलान्नृपाः ॥ ९६ ॥ हुत्वाबिल्वफलैःपक्वैःश्रियंविं देदानिंदितां ॥ प्रफुल्लैररुणांभोजैस्तामेवलभतेनरः ॥ ९७ ॥ हुत्वाज्योतिष्मतीतैलंसहस्रंव सुसंख्यकं ॥ सुभगोजायतेसम्यक्सर्वेषांनात्रसंशयः ॥ ९८ ॥ विधानेनामुनामंत्रीमहारो गात्प्रमुच्यते ॥ अश्वत्थसमिधाहोमःपराद्धतधनावहः ॥ ९९ ॥ आज्याक्तदूर्वाहोमेनमुच्य तेमृत्युतोभयात् ॥ यस्यनाम्नायुतंमंत्रंजपेदयुतसंख्यया ॥ १०० ॥ सभवेद्दासवत्तस्यनात्र कार्याविचारणा ॥ बहुनाकिमिहोक्तेनमनुनासाधकोत्तमः ॥ १ ॥ साधयेत्सकलान्कामान्सा क्षाद्विष्णुरिवापरः ॥ अथयंत्रंप्रवक्ष्यामिदृष्टादृष्टफलप्रदं ॥ २ ॥ पूर्वोत्तरभुवंभूत्वासूत्रंनवनवं न्यसेत् ॥ जायंतेतत्रकोष्ठानिचतुःषष्ठिप्रभेदतः ॥ ३ ॥ ईशानाद्राक्षसंयावद्राक्षसाद्वायुको णकं ॥ विलिखेन्मंत्रवर्णानिअनुष्टुप्संभवानिच ॥ ४ ॥ यंत्रमेतत्समाख्यातंसर्वतोभद्रसं ज्ञकं ॥ सर्वरोगप्रशमनंसमस्तपुरुषार्थदं ॥ ५ ॥ लिखितंभूर्जपत्राद्यैर्यंत्रमेतद्यथाविधि ॥ विधृतंबाहुनानित्यंसर्वकामफलप्रदं ॥ ६ ॥ फलकेखादिरेक्लृप्तंगवांगोष्ठेनिवेशितं ॥ रक्ष णंचोरमारिघ्नंसवत्सानांगवांहितं ॥ ७ ॥ क्षीरगोपयगोरक्षीरक्षमाक्षक्षमाक्षर ॥ गोमानोगग नोमागोयक्षगक्षक्षगक्षयः ॥ ८ ॥ इत्येवंयंत्रतत्वंचकथितंतवसुव्रत ॥ केवलंत्वत्प्रयत्नेन किमन्यच्छ्रोतुमिच्छसि ॥ १०१ ॥ इतिश्रीगोतमीयतन्त्रे त्रिंशत्तमोऽध्यायः ॥ ३० ॥

गौतम उवाच ॥ सर्वज्ञसर्वशास्त्रज्ञसर्वतत्वार्थपारग ॥ स्वायंभुवनमस्तुभ्यंकृपांकुरुकृपाकर ॥ १ ॥ तवनाविदितंकिंचित्त्रैलोक्येसचराचरे ॥ ऋषिदेवमुनीनांचप्रधानस्त्वंपुरातनः ॥ २ ॥ कृपांकुरुमहाभागकृपयामयिसुव्रत ॥ संसारेदुःखभूयिष्ठेरागशोकभयाकुले ॥ ३ ॥ भवार्णवेनिमग्नंमांत्वमुद्धर्तुमिहार्हसि ॥ तवावतारोलोकानांक्षेमायचभवायच ॥ ४ ॥ इदानींकथयब्रह्मन्मंत्रसिद्धेस्तुलक्षणं ॥ सिद्ध्युपायंकतिविधंकथयस्वानुकंपया ॥ ५ ॥ श्रीनारद उवाच ॥ मनोरथानामक्लेशंसिद्धेरुत्तमलक्षणं ॥ मृत्यूनांहरणंतद्द्देवतादर्शनंतथा ॥ ६ ॥ प्रयोगाणामल्पक्लेशंतत्सिद्धेस्तुलक्षणंपरं ॥ परकायप्रवेशश्चपुरप्रवेशनंतथा ॥ ७ ॥ ऊर्ध्वाक्रमणमेवंहिचराचरपुरेगतिः ॥ खेचरीमेलनंचैवतत्कथाश्रवणंतथा ॥ ८ ॥ भूमिच्छिद्राणिपश्यतःपातालादिषुसंगमः ॥ आकर्षणंसुरस्त्रीणांनागस्त्रीणांविशेषतः ॥ ९ ॥ पादुकागुटिकातद्वदंजनींविवरंतथा ॥ अणिमाद्यश्चसंप्राप्यकेवलंमोक्षमाप्नुयात् ॥१०॥ इत्येवंकथितंब्रह्मन्प्रधानसिद्धिलक्षणं ॥ इदानींतेप्रवक्ष्यामिमध्यमस्यतुलक्षणम् ॥ ११ ॥ ख्यातिवाहनभूषादिलाभःसुचिरजीवितम् ॥ नृपाणामबलानांचवशीकरणमुत्तमम् ॥ १२ ॥ सर्वत्रसर्वलोकेषुचमत्कारकरंमहत् ॥ रोगापहरणंचैवविषापहरणंतथा ॥ १३ ॥ पांडित्यंलभतेमंत्राच्चतुर्विधमयत्नतः ॥ वैराग्यंचमुमुक्षुत्वंत्यागितासर्ववश्यता ॥ १४ ॥ अष्टांगयोगाभ्यसनंभो



गेच्छापरिवर्जनं ॥ सर्वभूतानुकंपाचसर्वज्ञत्वादिगुणोदयः ॥ १५ ॥ इत्यादिगुणसंपत्तिर्मे

गेच्छापरिवर्जनं ॥ सर्वभूतानुकंपाचसर्वज्ञादिगुणोदयः ॥ १५ ॥ इत्यादिगुणसंपत्तिर्म
ध्यासिद्धेस्तुलक्षणं ॥ महैश्वर्यधनित्वंचपुत्रदारादिसंपदः ॥ १६ ॥ अधमाःसिद्धयःप्रोक्तामं
त्रिप्रथमभूमिकाः ॥ सिद्धमंत्रस्तुयःसाक्षात्सशिवोनात्रसंशयः ॥ १७ ॥ सिद्धिलक्षणमित्यु
क्तंतदुपायमिहोच्यते ॥ पितृमातृविशुद्धायेशुद्धाचाराजितेन्द्रियाः ॥१८॥ सत्संप्रदायोपदि
ष्टास्तेषांसिद्धिर्द्रुतंभवेत् ॥ मलिनामलसंछन्नाःपापिनस्तरलाशयाः ॥ १९ ॥ देवतार्चना
दिविमुखागुरवेशठवृत्तयः ॥ तेषांकृतैर्नसिद्ध्यंतिमंत्राजपहुतादिभिः ॥ २० ॥ येमंत्रामल
संछन्नाःकेवलंवर्णरूपिणः ॥ निर्बीजाःसत्वहीनायेकुंठिताश्चतिरस्कृताः ॥ २१ ॥ अरि
पक्षेस्थितायेचशापादिसंयुतास्तथा ॥ येमंत्राअविधिप्राप्तायेचासिद्धांतवर्जिताः ॥ २२ ॥
इत्यादिदोषदुष्टाश्चासिद्धिदानाल्पयोगतः ॥ पशुभावेस्थितामंत्राःकेवलंवर्णरूपिणः ॥ २३ ॥
सुषुम्णाध्वन्युच्चरिताःप्रभुत्वंप्राप्नुवंतिते ॥ वक्ष्यामिचरमेध्यायेतदुपायान्तवानघ ॥ २४ ॥
संस्कारादशकथ्यंतेयेनमंत्रस्यसिद्धयः ॥ अल्पयोगेनविधिवत्तांश्चवक्ष्यामितत्वतः ॥ २५ ॥
जननंजीवनंपश्चात्ताडनंबोधनंतथा ॥ अथाभिषेकोविमलीकरणाप्यायनेतथा ॥ २६ ॥
तर्पणंदीपनंगुप्तिर्दशैतामंत्रसंस्क्रियाः ॥ स्वर्णादिपात्रेसंलिख्यमातृकायंत्रमुत्तमं ॥ २७ ॥
काश्मरिचन्दनेनाथभस्मनावाथसुव्रतः ॥ काश्मीरंशाक्तसंस्कारेचंदनंवैष्णवेमनौ ॥ २८ ॥

शैवेभस्मसमाख्यातंमातृकायंत्रलेखने ॥ मंत्राणांमातृकामध्यादुद्धारोजननंस्मृतम् ॥२९॥
पंक्तिक्रमेणविधिनामुनिभिस्तंत्रनिश्चयैः ॥ प्रणवांतरितान्कृत्वामंत्रवर्णान्जपेत्सुधीः॥३०
प्रत्येकंशतवारंतुजीवनंतदुदाहृतं ॥ मंत्रवर्णान्समालिख्यताडयेच्चंदनांभसा ॥ ३१ ॥ प्र
त्येकंवायुबीजेनपूर्वादिताडनंमतं ॥ भस्मनाकुंकुमेनाथचंदनेनाथवापुनः ॥३२॥ शैवादिमं
त्रभेदेनप्रोक्तंद्रव्यत्रयंशुभं ॥ विलिख्यमंत्रपिंडंतुप्रसूनैःकरवीरजैः ॥ ३३ ॥ तन्मंत्रवर्णसं
ख्यातैर्हन्याद्रेफेनबोधनं ॥ ततस्तंत्रोक्तविधिनातर्पणंतर्पणंमतं ॥ ३४ ॥ मधुनाशक्तिमंत्रे
चवैष्णवेचेन्दुमज्जलैः ॥ शैवेघृतेनदुग्धेनएतैश्चतर्पणंमतं ॥ ३५ ॥ अन्यमंत्रेविहितेनतर्पणं
सम्यगीरितं ॥ जलेनसर्वतन्त्रेषुअभिषेकःप्रकीर्तितः ॥ ३६ ॥ अश्वत्थपल्लवैःसिंचेन्मंत्री
मंत्रार्णसंख्यया ॥ संचिंत्यमनसामन्त्रंसुषुम्णामूलमध्यतः ॥ ३७ ॥ ज्योतिर्मन्त्रेणविधिव
द्दहेन्मलत्रयंयतिः ॥ तारव्योमाग्निमनुयुग्दंडज्योतिर्मनुर्मतः ॥ ३८ ॥ विमलीकरणमेतद्धि
मन्त्रासिद्धिकरंपरम् ॥ अनेनकुशतोयेनपुष्पतोयेनवातथा ॥ ३९ ॥ तेनमन्त्रेणाविधिवदा
प्यायनविधिःस्मृतः ॥ दीपयेत्सर्वमंत्राणिसंयोगस्तारकामयोः ॥४०॥ आप्यमानंचमंत्रंच
गोपयेत्सर्वासिद्धये ॥ दीप्यमानस्यमंत्रस्यदशैतामंत्रसंस्क्रियाः॥४१॥ यान्कृत्वासंप्रदायेनमं
त्रीवांछितमश्नुते ॥ अथान्यत्संप्रवक्ष्यामिमंत्राणांसिद्धिलक्षणं ॥ ४२ ॥ यत्कृत्वामंत्रवि

गोपयत्सर्वसिद्धये ॥ दा[illegible] ॥४१॥ यान्कृत्वासंप्रदायेनमं
त्रीवांछितमश्नुते ॥ अथान्यत्संप्रवक्ष्यामिमंत्राणांसिद्धिलक्षणं ॥ ४२ ॥ यत्कृत्वामंत्रवि



त्सम्यक्सिद्धिमाप्नोत्ययत्नतः ॥ निर्बीजामनवोयेचतेषुबीजान्नियोजयेत् ॥४३॥ कामश्री
शक्तिबीजंवाजपनात्सिद्धिदोमनुः ॥ अथान्यत्संप्रवक्ष्यामिसिद्ध्युपायंमुनेशृणु ॥ ४४ ॥
स्थानस्थावरदामंत्राध्यानस्थाश्वफलप्रदाः ॥ ध्यानस्थानविहीनायेकोटिजापात्फलंनहि ॥
४५ ॥ अथसुषुम्णाधारेषुध्यायेज्ज्योतिर्मयंमनुम् ॥ अथतेऽन्यत्प्रवक्ष्यामियंत्रसिद्धेस्तुलक्षणं
॥ ४६ ॥ मातृकापुटितंकृत्वास्वमंत्रंप्रजपेत्सुधीः ॥ क्रमोत्क्रामाच्छतावृत्यातदंतेकेवलंमनुं
॥ ४७॥ एवंतुप्रत्यहंजाप्यायावल्लक्षंसमाप्यते ॥ निश्चितंमंत्रसिद्धिःस्यादित्युक्तंतंत्रवेदिभिः
॥ ४८ ॥ अथसंक्षेपतोवक्ष्येपुरश्चरणमुत्तमं ॥ चंद्रसूर्यग्रहेचैवशुचिःपूर्वमुपोषितः ॥ ४९ ॥
नद्यांसमुद्रगामिन्यांनाभिमात्रोदकेस्थितः ॥ ग्रहणादिविमोक्षांतंजपेन्मंत्रंसमाहितः ॥५०॥
होमयेत्तद्दशांशेनतद्दशांशेनतर्पयेत् ॥ अभिषिंचेद्दशांशेनदशांशेविप्रभोजनं ॥ ५१ ॥ इ
त्येवंपंचकृत्येनसिद्धमन्त्रोभवेन्नरः ॥ अथवामूर्ध्निदेशेचगुरुंसंचिंत्यवाग्यतः ॥ ५२ ॥ गुर्व
ग्रेनिवसन्मंत्रीयथोक्तंजपमाचरेत् ॥ अनंतरंदशांशेनक्रमाद्धोमादिकंचरेत् ॥ ५३ ॥ एवंकृ
त्वासिद्धमंत्रोभवेन्मंत्रीनचान्यथा ॥ गुरवेदक्षणांदद्याद्भूषणाच्छादनादिभिः ॥ ५४ ॥ गु
रोःसंतोषमात्रेणसिद्धिःस्यादपवर्गदा ॥ नाजप्तःसिद्धिदोमंत्रोनाहुतश्चकदाचन ॥ ५५ ॥
नापूजितश्चविधिवन्नातर्पितोनभोजितः ॥ पंचकृत्ययुतेमंत्रेकालसंख्यानविद्यते ॥ ५६ ॥

कृतेचोक्तजपात्सिद्धिस्त्रेतायांद्विगुणोजपः ॥ द्वापरेत्रिगुणश्चैवकलौसंख्याचतुर्गुणं ॥ ५७ ॥ कृष्णमन्त्रेषुविप्रर्षेयुगसंख्यानविद्यते ॥ जपहोमतर्पणाद्यैःसिद्ध्यतेकृतसंख्यया॥५८॥ सिद्धमंत्रतयानात्रयुगसेवापरिश्रमः ॥ अथापरंप्रवक्ष्यामिसिद्ध्युपायंमहाद्भुतम् ॥ ५९ ॥ येन सिद्धेनमनुवित्स्रष्टिस्थित्यंतकारकः ॥ तत्तत्कर्मानुरूपेणतत्तद्योगंप्रयोजयेत् ॥ ६० ॥ ग्रथनादिप्रभेदश्चमंत्राणांवक्ष्यतेऽधुना ॥ ग्रथितंसंपुटंग्रस्तंसमस्तंचविदार्भितं ॥ ६१ ॥ तथा चाक्रांतमाद्यंतंगर्भस्थंसर्वतोवृतं ॥ तथामुक्तिविदर्भंचविदर्भिग्रथितंतथा ॥ ६२ ॥ इत्येकादशधामंत्राःप्रयुक्ताःकार्यसिद्धिदाः ॥साध्यनामार्णमेकैकंमंत्रांतेसंप्रयोजितं ॥६३॥ ग्रथितंतत्समाख्यातंवश्याकृष्टिकरंपरं ॥ मंत्रमादौवदेत्सर्वंसाध्यसंज्ञामनंतरं ॥ ६४ ॥ विपरीतं पुनश्चांतेमंत्रंतत्संपुटंस्मृतं ॥ शांतिपुष्टिकरंज्ञेयंत्रैलोक्यैश्वर्यदायकं ॥ ६५ ॥ अर्द्धमर्द्धंतथाद्यंतेमंत्रंकुर्याद्विचक्षणः ॥ मध्येचास्यभवेत्साध्यंग्रस्तमित्यभिधीयते ॥ ६६ ॥ अभिचारेषुसर्वेषुयोजयेन्मारणेषुच ॥ अभिधानंवदेत्पूर्वंपश्चान्मंत्रंतथावदेत् ॥ ६७ ॥ एतत्समस्तमित्युक्तंशत्रूच्चाटनकारकं ॥ द्वौद्वौमंत्राक्षरौयत्रएकैकंसाध्यवर्णकं ॥ ६८ ॥ विदर्भितंचतंप्रोक्तंदुष्टघ्नंवश्यलक्षणं ॥ मंत्राणांतरितंसाध्यंसमंत्रोतिष्ठतेयदि ॥ ६९ ॥ आक्रांतंतद्विजानीयात्सद्यःसर्वार्थदायकः ॥ स्तेनस्तंभसमावेशवश्योच्चाटनकर्मसु ॥ ७० ॥ सकृत्पूर्ववदे

प्रोक्तंदुष्टमवश्यलक्षणं  [illegible] ॥ ६९ ॥ आक्रांततांद्विजा
नीयात्सद्यःसर्वार्थदायकः ॥ स्तेनस्तंभसमावेशवश्योच्चाटनकर्मसु ॥ ७० ॥ सकृत्पूर्ववदे

न्मंत्रमंतेचैवतथापुनः ॥ मध्येचास्यभवेत्साध्यमाद्यंतामितितद्विदुः ॥ ७१ ॥ अन्योन्यप्रीति
युक्तानांविद्वेषणकरंपरं ॥ आदौचांतेतथामंत्रंद्विवारंसंप्रयोजयेत् ॥ ७२ ॥ साध्यनामसकृ
न्मध्येगर्भस्थंतुतदुच्यते ॥ मारणोच्चाटनंवश्यंप्रयुक्तंकारयेन्नृणां ॥ ७३ ॥ हेतिनौसेनिधी
गर्भस्तंभनंचगतेतथा ॥ त्रिधामंत्रंवदेत्पूर्वंतथैवांतेपुनस्त्रिधा ॥ ७४ ॥ सकृत्साध्यंभवेन्म
ध्येतंविद्यात्सर्वतोवृतं ॥ सर्वोपसर्गशमनंमहामृत्युनिवारणं ॥ ७५ ॥ सर्वसौभाग्यजननंभू
तानाममृतप्रदं ॥ आदौमंत्रंततोनामपुनर्मंत्रंसमालिखेत् ॥ ७६ ॥ एवमेवत्रिधाकृत्वाभवे
न्मुक्तिविदर्भितं ॥ सर्वव्याधिहरंप्रोक्तंभूतापस्मारमर्दनं ॥ ७७ ॥ एकैकंसाध्यवर्णंतुकृत्वा
मंत्राविदर्भितं ॥ पूर्ववत्कथितंचान्यत्तस्याद्यंचप्रकल्पयेत् ॥७८॥ विदर्भग्रथितंनाममंत्रल
क्षणमुत्तमं ॥ सर्वकर्मकरंप्रोक्तंसर्वैश्वर्यफलप्रदं ॥ ७९ ॥ एवमेतेप्रयोगाश्वसिद्धमंत्रस्यसि
द्धिदाः ॥ अथापरंप्रवक्ष्यामिमंत्रासिद्धेस्तुलक्षणं ॥ ८० ॥ यज्ज्ञात्वासाधकश्रेष्ठोमं
त्रसिद्धिंलभेद्ध्रुवं ॥ सम्यगनुष्ठितोमंत्रोयदिसिद्धिर्नजायते ॥ ८१ ॥ पुनस्तथैवकर्तव्यंत
तःसिद्धिर्भवेद्ध्रुवं ॥ पुनश्चानुष्ठितोमंत्रोयदिसिद्धिर्नजायते॥८२॥ पुनस्तथैवकर्तव्यंततःसि
द्धोनसंशयः ॥ पुनःसोऽनुष्ठितोमंत्रोयदिसिद्धिर्नजायते ॥ ८३ ॥ उपायास्तत्रकर्तव्याःसप्त
शंकरभाषिताः ॥ आमणंबोधनंवश्यंपीडनंशोषणंषणे ॥ ८४ ॥ दहनांतंक्रमात्कुर्यात्ततः

सिद्धोभवेद्ध्रुवं ॥ आमणंवारुणेबीजेग्रथनंक्रमयोगतः ॥८५॥ तन्मंत्रंयंत्रमालिख्यशिला
कर्पूरकुंकुमैः ॥ उशीरचंदनाभ्यांतुमंत्रंसंग्रथितंलिखेत् ॥ ८६ ॥ क्षीराज्यमधुतोयानांमध्येत
ल्लिखितंक्षिपेत् ॥ पूजनाज्जपनाद्धोमात्सिद्धिदोभ्रमणंभवेत् ॥८७॥ आमितोयदिनोसिद्धोबो
धनंतस्यकारयेत् ॥ सारस्वतेनबीजेनसंपुटीकृत्यतंजपेत् ॥ ८८॥ एवंमंत्रोभवेत्सिद्धोनचेदे
तद्दशंकुरु ॥ अलक्तंचंदनंकुष्टंहरिद्रामदनंशिला ॥ ८९ ॥ एतैस्तुमंत्रमालिख्यभूर्जपत्रेसु
शोभने ॥ धार्यंकंठेनचेसिद्धःपीडनंचास्यकारयत् ॥ ९० ॥ अधरोत्तरयोगेनपदानिपरिज
प्यवै ॥ ध्यायीतदेवतांतद्वदधरोत्तररूपिणीम् ॥९१॥ विद्यामादित्यदुग्धेनालिखिलाक्रम्यचां
घ्रिणा ॥ तथाभूतेनमन्त्रेणहोमःकार्योदिनेदिने ॥ ९२ ॥ पीडितोलज्जयाविष्टःसिद्धःस्याद
थपोषयत् ॥ वालायास्तृतीयंबीजमाद्यंतेतस्ययोजयेत् ॥ ९३ ॥ गोक्षीरमधुनालिख्यवि
द्यांपाणौविधारयेत् ॥ पोषितोऽयंभवेत्सिद्धोनचेत्कुर्वीतशोषणं॥ ९४॥ द्वाभ्यांचवायुबीजा
भ्यांमंत्रंकुर्याद्विदर्भितं ॥ एषाविद्यागलेधार्यालिखित्वावरभस्मना ॥ ९५ ॥ शोषितोऽपिन
सिद्धश्चेद्दहनीयोऽग्निबीजतः ॥ आग्नेयेनतुबीजेनमंत्रस्यैकैकमक्षरं ॥ ९६॥ आद्यंतमध्यमुद्धृ
त्ययोजयेद्दाहकर्मणि ॥ ब्रह्मवृक्षस्यतैलेनमंत्रमालिख्यधारयेत् ॥ ९७ ॥ कंठदेशेततोमंत्रासि
द्धिःस्याच्छंकरोदितं ॥ इत्येतत्कथितंसम्यक्केवलंतवभक्तितः ॥ ९८ ॥ एकेनतुकृतार्थः

त्ययोजयद्दाहकर्माण ॥ ... ॥ १७ ॥ कठदशततामन्त्रासि
द्धिःस्याच्छंकरोदितं ॥ इत्येतत्कथितंसम्यक्केवलंतवभक्तितः ॥ ९८ ॥ एकेनतुकृतार्थः

स्याद्बहुभिःकिमुसुव्रत ॥ अथापरंप्रवक्ष्यामिमंत्रौषधंमहाद्भुतं ॥ ९९ ॥ यत्प्रयोगविधाने
नसद्यःसिद्धोभवेन्मनुः ॥ सुवर्णपुष्पमूलेनपिष्टेननिजवारिणा ॥ १०० ॥ तल्लिप्तस्यवांग
त्कंठोमनुःसद्यःप्रसीदति ॥ विमुक्तःसर्वपापौघैःकृष्णंपश्यतिचक्षुषा ॥ १ ॥ जीवन्मु
क्तोभवेन्मत्रीसत्यंसत्यंमयोदितं ॥ यत्रवाकुत्रचिद्देशेगंतुंकामयतेनरः ॥ २ ॥ स्वर्गेवाभूत
लेमंत्रीपातालेवाथकौतुकात् ॥ तत्क्षणात्तत्रयात्येवसर्वसिद्धीश्वरोभवेत् ॥ ३ ॥ इत्येवंकथि
तंसम्यक्मंत्रसिद्धेस्तुलक्षणं ॥ तदुपायश्चाथब्रह्मन्केवलंतवभाग्यतः ॥ ४ ॥ अनेकतंत्रसं
प्रोक्तमनेकमनुसंमतं ॥ इदानींतुपुनर्ब्रह्मन्किमन्यच्छ्रोतुमिच्छसि ॥ १०४ ॥ इतिश्रीगौत
मीयतन्त्रे एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
गौतम उवाच ॥ देवर्षेसर्वतंत्रज्ञसर्वशास्त्रार्थतत्ववित् ॥ कृष्णानुभवसंदर्शिन्नविद्याग्रंथिभेद
क ॥ १ ॥ सर्वजानासिसर्वज्ञविशेषात्कृष्णतत्ववित् ॥ इदानींकथयब्रह्मन्मंत्राचारानिदर्श
नं ॥ २ ॥ वैष्णवंपीठममलंतदावासफलंतथा ॥ विस्तरेणममब्रह्मन्ननुक्तमपिकथ्यतां
॥ ३॥ नागोप्यंतद्गुरोशिष्योयादियोग्योऽस्तिभाग्यतः ॥ नारद उवाच ॥ दीक्षयालब्धमंत्रस्य
सदाचारंशृणुष्वमे ॥ ४ ॥ अनायासेनासिद्धिःस्यात्सदाचारेणयेनवै ॥ आचाराल्लभतेकामा
नाचाराल्लभतेयशः ॥५॥ आचाराद्धनमाप्नोतिदीर्घमायुरवाप्नुयात् ॥ सदाचारेणमनुविज्ज

यीलोकद्वयेखलु ॥६॥ अनाचारोहिलोकेषुनिंदितःसर्वकर्मसु ॥ सर्वभूताऽनुकंपाचदानंचा
तिथिपूजनं ॥ ७ ॥ पंचयज्ञस्तीर्थसेवास्वाध्यायोगुरुसेवनं ॥ सामान्यंसर्वलोकानामेषधर्मः
सनातनः ॥ ८ ॥ ब्रह्मचारीदीक्षितश्चेत्त्रिसंध्यंदेवमर्चयेत् ॥ स्नानंत्रिषवणंतद्वद्वेदाध्ययनमे
वच ॥ ९ ॥ भैक्ष्यंसंप्रार्थयेन्नित्यंध्यायेद्देवंनिरंतरं ॥ पर्यटेद्विष्णुक्षेत्रेषुनप्रतिग्रहमाचरेत् ॥१०॥
गृहस्थोदीक्षयायुक्तःसर्वकर्माणिसाधयेत् ॥ नजापोनार्चनंचैवध्यानेनैवविधिक्रमः ॥ ११ ॥
केवलंसततंकृष्णचरणांभोजसेवनं ॥ सन्यासिनांमुमुक्षूणांमानसोपरतिःपरं ॥ १२ ॥ परि
व्राडविरक्तश्चाविरक्तश्चतथागृही ॥ उभौतौनरकेघोरेपच्येतेभूतसंप्लवं ॥ १३ ॥ गृहस्थोध
र्मपत्नीभिःपूजयेद्देवमन्वहं ॥ दद्याद्दानंमहार्हेंचयेनकृष्णःप्रसीदति ॥ १४ ॥ सन्यासिनांद्र
व्यदानेनाधिकारोऽस्तिसुव्रत ॥ वर्णिनांचवनस्थानांकोदद्यात्तदपेक्षितं ॥१५॥ किंतुवैष्ण
वधर्मेषुविरलाअधिकारिणः ॥ संसारवासनारज्जुबद्धंलोलंमनोनृणां ॥ १६ ॥ ततोयदिवि
मुक्तःस्याद्बद्धःस्याद्देवपादयोः ॥ तत्रैवान्योविशेषोऽस्तिश्रूयतांचावधार्यतां ॥ १७॥ सर्वसं
सारदोषोहिनारीमूलंततोयदि ॥ शक्यतेरक्षितुंचेतस्तदावैकृष्णसाधकः ॥ १८ ॥ अचंच
लंमनोयस्ययोषित्संगविवर्जितं ॥ योषितांध्याननिर्मुक्तंतच्छब्दश्रुतिवर्जितं ॥ १९ ॥ त
त्रैवसाधकःकुर्यात्साधनंसुसमाहितः ॥ वलयध्वनयोनैवश्रूयंतेयत्रयोषितां ॥ २० ॥ नस्त्री

लमनोयस्ययोषित्संगोविवर्जितः ॥ योषितांध्यानमुक्तंचछंदश्रौविवर्जितं ॥ १९ ॥ त
त्रैवसाधकःकुर्यात्साधनंसुसमाहितः ॥ वलयध्वनयोनैवश्रूयंतेयत्रयोषितां ॥ २० ॥ नस्त्री

मुखंनिरीक्षेतनास्त्रियंमनसास्मरेत् ॥ ब्रह्मचारीमिताहारीहविष्याशीजितेन्द्रियः॥ २१॥साधकः
साधनंकुर्यात्त्यागीयोगपरायणः ॥ कदाचिद्यदितच्चेतस्खलनंवाथजायते ॥२२॥ प्राणायामं
विशेषणसमभ्यस्येत्तुसाधकः ॥ साहिपातकदारूणांदहनःपरिकीर्तितः ॥ २३ ॥ एककालं
त्रिसंध्यंवाचतुःकालंसमभ्यसेत् ॥ समस्तपापराशीनांमनोवाक्कायकर्मणाम् ॥२४॥प्राणसंय
ममात्रंहिप्रायश्चित्तंसुनिश्चितं ॥ पुण्यतीर्थेचपुलिनेसरितांदेवसद्मनि ॥ २५ ॥ नद्यास्तटेऽथ
विजनेविपिनेतुलसीवने ॥ गोष्ठेतथैवोपवनेतथाहिगिरिकानने ॥ २६ ॥ विशेषतोद्वारवत्यां
तथागोवर्द्धनेगिरौ ॥ यद्वाकलिंदकन्यायाःकाननेपुलिनेतथा ॥ २७ ॥ वृंदावनेगोकुलेवा
मथुरायामथापिवा ॥ मथ्नातिपापराशिंयद्दातितत्परमंपदम् ॥ २८ ॥ उत्तमोहिनरोयत्रतेन
सामथुरास्मृता ॥ बदरीखंडविपिनेगंगाद्वारेऽथवापुनः ॥२९॥ व्यंकटेऽद्रौश्रीरंगेवाक्षेत्रेश्रीपु
रुषोत्तमे ॥ उत्तमःपुरुषोयत्रतत्क्षेत्रंपुरुषोत्तमं ॥ ३० ॥ एषुस्थानेषुविप्रर्षेनित्यंसन्निहितो
हरिः ॥ अतएवसाधकेन्द्रोनिवसेत्तदपेक्षया ॥३१॥हरिसंदर्शनंयावत्निवसेत्सुखनिःस्पृहः ॥
स्थानान्येतानिशुद्धानिकृत्यंकिंचिन्निगद्यते ॥ ३२ ॥ विशेषतःपशुजनैर्नास्तिकैर्नसमागमः॥
निंदितैर्नासहासीततदालापंचवर्जयेत् ॥ ३३ ॥ स्त्रीसंगिनंवर्जयेच्चतत्कथाकथनंतथा ॥
जन्मासाद्यमनुष्येषुशुद्धेचपितृमातरी ॥ ३४ ॥ वर्तमानेचसुकृतेतथैवेन्द्रियपाटवे ॥ ब्रह्म

न्ब्रह्मणिगोपालेरतिर्जायेतभाग्यतः ॥ ३५ ॥ त्रिवर्गफलदेकिंवाबहुनात्मफलप्रदे ॥ यो नार्चयतिकल्पस्सन्तस्मात्पापतरोहिकः ॥ ३६ ॥ असारेघोरसंसारेसारंकृष्णपदार्चनं ॥ तत्पदंनार्चितंयेनपापिनापापकर्मणा ॥ ३७ ॥ शरीरभारवहनंजन्मास्यापिनिरर्थकं ॥ गोपालंपूजयेद्यस्तुनिंदयेदन्यदेवतां ॥ ३८ ॥ अस्तुतस्यपरोधर्मःपूर्वोधर्मोविनश्यति ॥ प्रत्यहं क्षालयेच्छय्यामेकाकीनिर्भयःस्वपेत् ॥ ३९ ॥ नाधिरोहेतपर्यंकंरक्तवासोनधारयेत् ॥ नरक्तचंदनंगात्रेगृह्णीयाद्रक्तपुष्पकं ॥ ४० ॥ बिल्वपत्रैस्तत्प्रसूनैर्नार्चयेद्देवकीसुतं ॥ नैवहिरशनंकुर्यात्पर्ववर्जमृतौतथा ॥ ४१ ॥ तथानिषेवयेद्धर्मपत्नींधर्मरिरक्षया ॥ ततःपरदिनेकृत्यं कुर्यात्स्नानोत्तरंसुधीः ॥ ४२ ॥ शरीरोद्वर्तनंकृत्वास्नात्वानद्यादिवारिणा ॥ नियतेयागकालेतुनकुर्यादन्यवेक्षणं ॥ ४३ ॥ नैवाश्लीलंवचोब्रूयादालापंचनिरर्थकं ॥ नवृथागमयेत्कालं केवलंध्यानतत्परः ॥ ४४ ॥ केवलंश्रीपदांभोजन्यस्तचेताभवेत्सुधीः ॥ यद्यत्कर्मणिवैगुण्यंनित्येनैमित्तिकेऽपिवा ॥४५॥ सहस्रंप्रजपेन्मूलमनुंवाऽयुतमेववा ॥ नित्येसहस्रंप्रजपेन्नैमित्तिकेतथाऽयुतं ॥४६॥ सर्वेषामेवपापानांशोधनंमंत्रजापतः ॥ सुवर्णंवन्हिनाध्मातंयथाभवतिनिर्मलं ॥ ४७ ॥ तथासर्वगतंपापंप्रायश्चिताग्निनादहेत् ॥ तथैवतुलसीपत्रैर्मालतीकुसुमैरपि ॥ ४८ ॥ चंपकैःकेसरैश्चापिअशोकैःकिंशुकैरपि ॥ अन्यैश्चविविधैःपुष्पैर्दर्शनी

वातानमल ॥ ४७ ॥ [illegible] ॥ तथैवतुलसीपत्रमालतीकु



सुमैरपि ॥ ४८ ॥ चंपकैःकेसरैश्चापिअशोकैःकिंशुकैरपि ॥ अन्यैश्चविविधैःपुष्पैर्दर्शनीयैःसुगंधिभिः ॥ ४९ ॥ आरामजैर्विपिनजैर्निषिद्धपरिवर्जितैः ॥ इत्येवंकथितंपुष्पविधानं हरिपूजने ॥ ५० ॥ पशूनांहिंसनंनैवकुर्यात्कस्यापिपीडनं ॥ कटुवाक्यंवर्जयेच्चब्रूयान्मधुर भाषणं ॥ ५१ ॥ संस्कृतेनैवकथयेन्नान्यांभाषांवदेत्सुधीः ॥ आत्मदैवतयोरैक्यंगुरुदैवत योरपि ॥ ५२ ॥ ऐक्यंसंभावयेद्बुद्ध्यानगुरोःशासनंत्यजेत् ॥ एकग्रामेगुरुंनित्यंगत्वावंदेत भक्तितः॥५३॥ योजनानंतरेभक्त्यामासंमासंचवंदयेत् ॥ अतःपरंतस्यांदिशिनमस्कुर्याच्चभ क्तितः ॥ ५४ ॥ अथवामानसींपूजांप्रकुर्यान्निजमूर्धनि ॥ पितृवंशेमातृवंशेशुद्धःसत्यपरा यणः ॥ ५५॥ नजारजोनकानीनोनराक्षसविवाहजः ॥ ब्राह्मणःक्षत्रियश्चैववैश्यःशुद्रस्तथै वच ॥ ५६ ॥ निरपेक्षोहरिंजह्वाहरिर्भवतिनापरः ॥ गृण्हंस्तस्यचनामानितत्कथाश्रवणो त्सुकः ॥५७॥ नमस्यंस्तत्पदांभोजंभक्तोऽयंप्रेमलक्षणः ॥ पक्षद्वयेऽपिमतिमान्नलंघेद्धरिवा सरं ॥ ५८॥ अपिचांडालगेहान्नंमातृणांगमनंवरं ॥ नलंघेन्मतिमान्क्वापिसंप्राप्तंहरिवासरं ॥ ५९ ॥ वैष्णवोयदिभुंजीतएकादश्यांप्रमादतः ॥ विष्णवर्चनंवृथातस्यनरकंघोरमाप्नुयात् ॥ ६० ॥ शुक्लोपचारसंभारैर्नित्यशोहरिमर्चयेत् ॥ निवेद्यकृष्णायविधिवदन्नंभुंजीततत्स्व यं ॥ ६१ ॥ अथवासात्वतेदद्याद्यदिलभ्येतभाक्तितः ॥ निवेदयेदुत्तमान्नंनकदन्नंकदाचन॥ ६२ ॥ उत्तमंविधिनाप्रोक्तंकदन्नंमुनिदूषितं ॥ शिलोंच्छविधिनाप्राप्तमथवायदयाचितं ॥

६३ ॥ स्ववित्तोपाचितंवापिकृष्णायपरिकल्पयेत् ॥ शूद्राल्लब्धंछलाल्लब्धमथवादूषिकाचितं ॥ ६४ ॥ इत्याद्यन्नंकदन्नंतुदानान्नरकमावहेत् ॥ रात्रौहविष्यंभुंजीतचांद्रायणफलार्थिभिः॥ ६५॥ हरिभक्तस्ययुक्तस्यविरुद्धंदिवसाशनं ॥ कार्तिकेमासिविधिवदर्चयेत्कृष्णमन्वहं ॥६६ रात्रौजागरणंकुर्याद्वैष्णवैर्हरिकीर्तनं ॥ ब्राह्ममुहूर्तेचोत्थायनिर्वर्त्यसकलाःक्रियाः ॥६७॥ यजेत्सुशोभनेस्थानेपशुदृष्टिविवर्जिते ॥ सर्वोपचारैराराध्यप्रदीपान्घृतपूरितान् ॥ ६८ ॥ अष्टोत्तरशतंदद्यादथवाशक्तितोमुने ॥ सहस्रंप्रजपेन्मंत्रंहोमंदशांशतोहुनेत् ॥ ६९ ॥ एवंनित्यक्रमंकुर्याद्दिवामौनंसमाचरेत् ॥ इत्थंविधिवदाराध्ययावन्मासंप्रपूजयेत् ॥७०॥ सत्यलोकमवाप्नोतिपुनरावृत्तिवर्जितं ॥ इहलोकेवरान्भोगान्भुक्त्वामनोरथातिगान् ॥७१॥ देहांतेसाधकश्रेष्ठोवैकुंठंनिश्चितंव्रजेत् ॥ अस्मिन्मासिचामलायांद्वादश्यांहरितोषणं ॥ ७२ ॥ सर्वोपचारैःकुर्वीतवित्तशाठ्यविवर्जितं ॥ अनेनार्चनमात्रेणभवबंधात्प्रमुच्यते ॥ ७३ ॥ एतदर्चनमात्रंहिहरितोषणकारणं ॥ मार्गशीर्षेतथाप्रातःस्नात्वाचैवनरोत्तमः ॥ ७४ ॥ क्रमपूजांसमासाद्यजपहोमौतथाचरेत् ॥ पायसंगुडमिश्रंचप्रत्यहंविनिवेदयेत् ॥ ७५ ॥ एवंमासार्चनंकृत्वाभवेद्भाग्यालयःपुमान् ॥ देहांतेमोक्षमाप्नोतिप्रसादाच्छार्ङ्गधन्वनः ॥ ७६ ॥ अथभाद्रसिताष्टम्यांप्रादुरासीत्स्वयंहरिः ॥ ब्रह्मणाप्रार्थितःपूर्वंदेवक्यांकृपयाप्रभुः ॥ ७७ ॥

चेनंकृत्वाभवेद्भाग्यालयःपुमान् ॥ [illegible]न्वनः ॥ ७६ ॥ अ
थभाद्रसिताष्टम्यांप्रादुरासीत्स्वयंहरिः ॥ ब्रह्मणाप्रार्थितःपूर्वंदेवक्यांकृपयाप्रभुः ॥ ७७ ॥

रोहिण्यर्क्षेशुभतिथौदैत्यानांनाशहेतवे ॥ महोत्सवंप्रकुर्वीतयत्नतस्तद्दिनेशुभे ॥ ७८ ॥
राजभिर्ब्राह्मणैर्वैश्यैःशुद्रैश्चैवस्वशक्तितः ॥ उपवासंप्रकुर्वीतनभोक्तव्यंकदाचन ॥ ७९ ॥
कृष्णजन्मदिनेयस्तुभुंक्तेसतुनराधमः ॥ निवसेन्नरकेघोरेयावदाभूतसंप्लवं ॥ ८० ॥ अष्ट
मीरोहणीयुक्ताचार्धरात्रेयदाभवेत् ॥ उपोष्यतांतिथिंविद्वान्कोटियज्ञफलंलभेत् ॥ ८१ ॥
सोमाह्निबुधवारेवाअष्टमीरोहणीयुता ॥ जयंतीसासमाख्यातातांलभेत्पुण्यसंचयैः ॥ ८२॥
तस्यासुपोष्ययत्पापंलोककोटिभवोद्भवं ॥ विमुच्यनिवसेद्विप्रवैकुंठेविरजेपुरे ॥ ८३ ॥
अष्टमीनवमीविद्धाउमामाहेश्वरीतिथिः ॥ सैवोपोष्यासदापुण्यकांक्षिभीरोहिणींविना ॥
८४ ॥ परविद्धासदाकार्यापूर्वविद्धांतुवर्जयेत् ॥ अष्टमीसप्तमीविद्धाहन्यात्पुण्यंपुराकृतं
॥ ८५ ॥ ब्रह्महत्याफलंदद्याद्धरिवैमुख्यकारणात् ॥ केवलमृक्षयोगेनउपवासस्तिथिंविना
॥ ८६ ॥ नशस्तंशुभकार्यंतुमुनिभिःपरिनिश्चितं ॥ परेऽह्निपारणंकुर्यात्तिथ्यंतेवाथऋक्ष
तः ८७ ॥ यदृक्षंवातिथिर्वापिरात्रिंव्याप्यव्यवस्थिता ॥ दिवसेपारणंकुर्यादन्यथापतनंभ
वेत् ॥ ८८ ॥ गवांग्रासंप्रदद्याच्चगवांकंडूतिमाचरेत् ॥ विप्रायवेदविदुषेगांचदद्यात्पय
स्विनीं ॥ ८९ ॥ सवत्सांयुवतींरम्यांसगुणांसमलंकृतां ॥ रुक्मशृंगींरौप्यखुरांवस्त्रेणाच्छा
ययत्नतः ॥ ९० ॥ ददातिविप्रवर्यायकृष्णप्रीत्यर्थमुत्तमं ॥ इत्युक्त्वाविप्रवर्येभ्योदद्याद्रा

श्वसदक्षिणाः ॥९१॥ रात्रौजागरणंकुर्यादर्चयेत्तत्समाहृतिः ॥ स्वर्णप्रतिकृतिंकृत्वातस्यांकृष्णंसमर्चयेत् ॥ ९२ ॥ वसुदेवंदेवकींचपूर्ववत्कारयेत्तथा ॥ सुवर्णानियमश्चात्रश्रूयतांमुनिसत्तम ॥ ९३ ॥ पलैश्चतुर्भिर्गोपालंतदर्धेनचदेवकीं ॥ वसुदेवंतथाकुर्यादथवाविभवावधि ॥ ९४॥ ब्राह्मेमुहूर्तेउत्थायकृत्वावश्यंप्रसन्नधीः ॥ स्नात्वापूर्ववदाराध्यआहूयवेदपारगं ॥ ९५ ॥ कुटुंबिनंदरिद्रंचविप्रंबहुगुणान्वितं ॥ दत्वातस्मैसुशीलायदक्षिणामुक्तलक्षणां ॥९६॥ प्रीयतांकृष्णइत्युक्त्वासंपूज्यकृष्णमानसः ॥ घृतखंडादिभोज्यानिब्राह्मणेभ्योनिवेदयेत् ॥ ९७ ॥ महांतमुत्सवंकृत्वाप्रीतयेशार्ङ्गधन्वनः ॥ पारणंचप्रकुर्वीतबंधुभिःसहकृष्णावित् ॥ ९८ ॥ एवंयःकुरुतेभक्त्याशक्त्याचहरितोषणं ॥ इहभुक्त्वावरान्भोगान्साक्षाद्भूमिपुरंदरः ॥ ९९ ॥ एवमाराधनादेवभक्तिःस्यात्प्रेमलक्षणा ॥ देहांतेविहरेल्लोकेवैकुंठेहरिवच्चरेत् ॥ १०० ॥ इतितेकथितंकिंचिदाराधनविधिंहरेः ॥ केवलंतवयत्नेनकिमन्यच्छ्रोतुमिच्छसि ॥ १०१ ॥ इतिश्रीगौतमीयतन्त्रे द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

गौतम उवाच ॥ देवर्षेयोगयुक्तात्मन्योगानुभवदर्शक ॥ सांख्ययोगविशेषज्ञकर्मयोगनिषेवक ॥ १ ॥ विनायोगंनसिद्ध्येतकुंडलीचंक्रमःप्रभो ॥ मूलपद्मेकुंडलिनीयावन्निद्रातिहेप्रभो ॥ २ ॥ तावत्किंचिन्नसिद्ध्येतमंत्रतंत्रार्चनादिकं ॥ जागर्तियदिसादेवीबहुभिःपु

षवकं ॥ १ ॥ विनायोगिनामि[illegible]तकुंडलीचक्रमःप्रभो ॥ मूलपद्मकुंडलिनीयावन्निद्रा[illegible]ति
हेप्रभो ॥ २ ॥ तावत्किंचिन्नसिद्ध्येतमंत्रतंत्रार्चनादिकं ॥ जागर्तियदिसादेवीबहुभिःपु 



ण्यसंचयैः ॥ ३ ॥ तदाप्रसादमायांतिमंत्रयंत्रार्चनानिच ॥ वत्सराद्विहरेल्लोकेअष्टैश्वर्यसम
न्वितः ॥ ४ ॥ योगयोगाद्भवेन्मुक्तिर्मंत्रसिद्धिरखंडिता ॥ सिद्धेमनौपरावाप्तिरितिशास्त्रार्थ
निश्चयः ॥ ५ ॥ तस्मात्कार्ष्णपरंयोगंकथयस्वमुनीश्वर ॥ मुक्तात्मायेनविहरेत्स्वर्गेमर्त्येरसा
तले ॥६॥ जीवन्मुक्तश्चदेहांतेपरंनिर्वाणमावहेत् ॥ नारद उवाच ॥ कथयामितवस्नेहाद्यो
गयोग्योऽसिगौतम ॥ संसारोद्धारमुक्तिश्चयोगशब्देनकथ्यते ॥७॥ योगोहिनंदतनयोनिश्चि
तंविद्धिगौतम ॥ नयोगोनभसःपृष्ठेनभूमौनरसातले ॥ ८ ॥ ऐक्यंजीवात्मनोराहुर्योगंयोग
विशारदाः ॥ तत्प्रत्यूहाःषडाख्यातायोगविघ्नकरामुने ॥ ९ ॥ कामक्रोधलोभमोहमदमात्स
र्यसंज्ञकाः ॥ योगांगैरेभिर्जित्वैतान्योगिनोयोगमाप्नुयुः ॥ १० ॥ यमंनियममासनंप्राणाया
मस्ततःपरं ॥ प्रत्याहारंधारणाख्यंध्यानंसार्धंसमाधिना ॥ ११ ॥ अष्टांगान्याहुरेतानियोगि
नांयोगसाधने ॥ अहिंसासत्यमस्तेयंब्रह्मचर्यंदयार्जनं ॥ १२ ॥ क्षमाधृतिर्मिताहारःशौचं
चेतियमादश ॥ तपःसंतोषमास्तिक्यंदानंदेवस्यपूजनं ॥ १३ ॥ सिद्धांतश्रवणंचैवह्रीर्मति
श्चजपोहुतं ॥ दशैतेनियमाःप्रोक्तायोगशास्त्रविशारदैः ॥ १४ ॥ पद्मासनंस्वास्तिकाख्यं
भद्रंवज्रासनंतथा ॥ वीरासनमितिप्रोक्तंक्रमादासनपंचकं ॥ १५ ॥ ऊर्वोरुपरिविन्यस्यस
न्यकपादतलेउभे ॥ अंगुष्ठौचनिबध्नीयाद्धस्ताभ्यांव्युत्क्रमात्ततः ॥ १६ ॥ पद्मासनमिति

प्रोक्तंयोगिनांहृदयंगमं ॥ जानूर्वोरंतरेसम्यक्कृत्वापादतलेउभे ॥ १७ ॥ ऋजुकायोविशेद्यो
गीस्वास्तिकंतत्प्रवक्ष्यते ॥ सीमन्याःपार्श्वयोर्न्यस्यगुल्फयुग्मंसुनिश्चितं ॥ १८ ॥ वृषणाधः
पादपार्ष्णीपाणिभ्यांपरिबंधयेत् ॥ भद्रासनंसमुद्दिष्टंयोगिभिःपरिपूजितं ॥१९॥ ऊर्वोःपादौ
क्रमान्न्यस्यजान्वोःप्रत्यङ्मुखांगुलीः ॥ करौविदध्यादाख्यातंवज्रासनमनुत्तमं ॥ २० ॥
एकपादमधःकृत्वाविन्यस्योरौतथोत्तरं ॥ ऋजुकायोविशेद्योगीवीरासनमितीरितं ॥ २१ ॥
इडयाकर्षयेद्वायुंबाह्यंषोडशमात्रया ॥ धारयेत्पूरितंयोगीचतुःषष्ठ्यातुमात्रया ॥ २२ ॥ सु
षुम्णामध्यगंसम्यक्द्वात्रिंशन्मात्रयाशनैः ॥ नाड्यापिंगलयाचैनंरचयेद्योगवित्तमः ॥ २३ ॥
प्राणायाममिमंप्राहुर्योगशास्त्रविशारदाः ॥ भूयोभूयःक्रमात्तस्यबाह्यमेवंसमाचरेत् ॥ २४ ॥
मात्रावृद्धिक्रमेणैवसम्यग्द्वादशषोडश ॥ जपध्यानादिभिःसार्द्धंसगर्भंतंविदुर्बुधाः ॥ २५ ॥
तदपेतंविगर्भंचप्राणायामंपरेविदुः ॥ क्रमादभ्यासतःपुंसांदेहेस्वेदोद्गमोऽधमः ॥ २६ ॥ म
ध्यमःकंपसंयुक्तोभूमित्यागःपुरोमतः ॥ उत्तमस्यगुणावाप्तिर्यावच्छीलनमीष्यते ॥ २७ ॥
इंद्रियाणांविचरतांविषयेषुनिरर्गलं ॥ बलादाहरणंतेभ्यःप्रत्याहारोऽभिधीयते ॥२८॥ अंगुष्ठ
गुल्फजान्वंवुमूलाधारलिंगनाभिषु ॥ हृद्ग्रीवाकंठदेशेषुलंबिकायांततोनसि ॥ २९ ॥
भ्रूमध्येमस्तकेमूर्धनिद्वादशांतेयथाविधि ॥ धारणाप्राणमरुतोर्धारणेतिनिगद्यते ॥ ३० ॥

गुल्फजान्वंघुमूलाधारलिंगनाभिषु ॥ हृद्ग्रीवाकंठदेशेषुलंबिकायांततोनसि ॥ २९ ॥
भ्रूमध्येमस्तकेमूर्ध्नद्वादशांतेयथाविधि ॥ धारणाप्राणमरुतोर्धारणेतिनिगद्यते ॥ ३० ॥

समाहितेनमनसाचैतन्यांतरवर्तिना ॥ आत्मन्यभीष्टदेवानांध्यानंध्यानमिहोच्यते ॥ ३१ ॥
समत्वंभावनानित्यंजीवात्मपरमात्मनोः ॥ समाधिमाहुर्मुनयःप्रोक्तमष्टांगलक्षणं ॥ ३२ ॥
इत्यादिकथितंविप्रकामादिषट्कनाशनं ॥ इदानींकथयेतेऽहंमंत्रयोगमनुत्तमं ॥ ३३ ॥ वि
श्वंशरीरमित्युक्तंपंचभूतात्मकंमुने ॥ चंद्रसूर्याग्नितेजोभिर्जीवब्रह्मैकरूपतां ॥ ३४ ॥ तिस्रः
कोट्यस्तदर्धेनशरीरेनाडयोमताः ॥ तासुमुख्यादशप्रोक्तास्ताभ्यस्तिस्रोव्यवस्थिताः ॥ ३५॥
प्रधानामेरुदंडेनचंद्रसूर्याग्निरूपिणी ॥ इडावामेस्थितानाडीशुभ्रातुचंद्ररूपिणी ॥ ३६ ॥
शक्तिरूपातुसानाडीसाक्षादमृतविग्रहा ॥ दक्षिणेयापिंगलाख्यापुंरूपासूर्यविग्रहा ॥ ३७ ॥
दाडिमीकेशरप्रख्याविद्याख्यामुनिभिःस्मृता ॥ मेरुमुखेस्थितायातुमूलादारंध्रविग्रहा ॥३८
सर्वतेजोमयीसातुसुषुम्णावन्हिरूपिणी ॥ तस्यामध्येविचित्राख्यायाऽमृतस्राविणीशुभा ॥
३९ ॥ सर्वदेवमयीसातुयोगिनांहृदयंगमा ॥ विसर्गाद्बिंदपर्यंतंव्याप्यातिष्ठतितत्वतः ॥
४० ॥ मूलाधारेत्रिकोणाख्येइच्छादानक्रियात्मिके ॥ मध्यंस्वयंभूलिंगंतुकोटिसूर्यसमप्रभं
४१ ॥ तदूर्ध्वेकामबीजंतुकलातिबिंदुनादकं ॥ तदूर्ध्वेऽग्निशिखाकाराकुंडलीश्यामविग्रहा
॥ ४२ ॥ कृष्णात्मिकापरासातुकृष्णस्तंभेऽन्यतोनहि ॥ तद्बाह्येहेमरूपाभंवशषसचतुर्दलं
॥४३॥ द्रुतहेमसमप्रख्यंपद्मंतच्चविभावयेत् ॥ तदूर्ध्वेत्वनलप्रख्यंषट्दलंहीरकप्रभं ॥४४ ॥

वादिलांतषडर्णेनस्वाधिष्ठानमनुत्तमं ॥ मूलमाधारषट्कानांमूलाधारंततोविदुः ॥ ४५ ॥
स्वशब्देनपरंलिंगंस्वाधिष्ठानंततोविदुः ॥ तदूर्ध्वेनाभिदेशेतुमणिपूरंमहाप्रभं ॥ ४६ ॥ मे
घाभंविद्युदाभंचबहुतेजोमयंततः ॥ मणेरभिन्नंतत्पद्मंमणिपूरंतदुच्यते ॥ ४७ ॥ दशभि
श्चदलैर्युक्तंधूम्रवर्णैर्महाप्रभं ॥ विशुद्धंतनुतेयस्माज्जीवस्येहसलोकनात् ॥ ४८ ॥ विशुद्धंपद्म
माख्यातमाकाशाख्यंमहाद्भुतं ॥ तद्विष्ण्वधिष्ठितंपद्मंविष्ण्वालोकनकारणं ॥ ४९ ॥ तदू
र्ध्वेऽनाहतंपद्ममुद्यदादित्यसन्निभं ॥ कादिठांतदलैर्युक्तमर्कपत्रेणाधिष्ठितं ॥५० ॥ तन्मध्ये
बाणलिंगंतुसूर्यायुतसमप्रभं ॥ शब्दब्रह्ममयंशब्दानाहतंतत्रदृश्यते ॥ ५१ ॥ तेनाहताख्यं
तत्पद्मंमुनिभिःपरिकीर्तितं ॥ आनंदसदनंतत्तुपुरुषाधिष्ठितंपरं ॥ ५२ ॥ तदूर्ध्वेतुविशुद्धा
ख्यंदलषोडशपंकजं ॥ आज्ञाचक्रंतदूर्ध्वेतुआत्मनाधिष्ठितंपरं ॥ ५३ ॥ आज्ञासंक्रमणं
तत्रतेनाज्ञेतिप्रकीर्तितं ॥ कैलासाख्यंतदूर्ध्वेतुबोधिनीतुतदूर्ध्वतः ॥ ५४ ॥ एवंतुषट्कच
क्राणिप्रोक्तानितवसुव्रत ॥ सहस्रारयुतंबिंदुस्थानंतदूर्ध्वमीरितं ॥ ५५ ॥ इत्येवंकथितंसर्वं
योगमार्गमनुत्तमं ॥ आदौपूरकयोगेनआधारेयोजयेन्मनः ॥ ५६ ॥ गुदमेढ्रांतरेशक्तिस्ता
माकुंच्यप्रबंधयेत् ॥ लिंगभेदक्रमेणैवबिंदुचक्रंचप्रापयेत् ॥५७॥ शंभुनातांपरांशक्तिमेकी
भावंविचिंतयेत् ॥ तत्रोत्थितामृतंयत्तुद्रुतंलाक्षारसोपमं ॥ ५८ ॥ पाययित्वातुतांशक्तिंकृ

माकुंच्यप्रबंधयेत् ॥ [illegible] ॥ ५७ ॥ शंभुनातांपरांशक्तिमोकि


भावंविचिंतयेत् ॥ तत्रोत्थितामृतंयत्तुद्रुतंलाक्षारसोपमं ॥ ५८ ॥ पाययित्वातुतांशक्तिंकृ

ष्णाख्यांयोगसिद्धिदां ॥ षट्चक्रदेवतास्तत्रसंतर्प्यामृतधारया ॥ ५९ ॥ आनयेत्तेनमार्गेण
मूलाधारंततःसुधीः ॥ पुनस्तेनैवमार्गेणनयेतशांभवींसुधीः ॥ ६० ॥ एवमभ्यस्यमानस्यअ
हन्यहनिनिश्चितं ॥ जरामरणदुःखाद्यैर्मुच्यतेभवबंधनात् ॥ ६१ ॥ पूर्वोक्तदूषितामंत्राःसर्वे
शुद्ध्यंतिनान्यथा ॥ येगुणाःसंतिदेवस्यपंचकृत्याविधायिनः ॥ ६२ ॥ तेगुणाःसाधकवरेभ
वंत्येवनचान्यथा ॥ इत्येवंकथितंविप्रवायुधारणमुत्तमं ॥ ६३ ॥ इदानींधारणाख्यंतुशृणुष्वा
वहितोमया ॥ दिक्कालाद्यनवच्छिन्नेकृष्णेचेतोनिधायच ॥ ६४ ॥ तन्मयोभवतिक्षिप्रंजीव
ब्रह्मैक्ययोजनात् ॥ अथवासमलंचेतोयदिक्षिप्रंनसिद्ध्यति ॥६५ ॥ तदावयवियोगेनयोगी
योगान्समभ्यसेत् ॥ पादांभोजेमनोदद्यान्नखकिंजल्कचित्रिते ॥६६॥ जंघायुग्मेतथाऽऽरा
मकदलीकांडशोभिते ॥ ऊरुद्वयेमत्तहस्तिकरदंडसमप्रभे ॥ ६७ ॥ गंगावर्तगभीरेतुनाभौ
सिद्धिबिलेततः ॥ उदरेवक्षसितथाहारेश्रीवत्सकौस्तुभे ॥ ६८ ॥ पूर्णचंद्रायुतमुखेललाटे
चारुकुंतले ॥ शंखचक्रगदांभोजदोर्दंडपरिमंडिते ॥ ६९ ॥ सहस्रादित्यसंकाशेकिरीटेकुं
डलद्वये ॥ स्थानंस्थानंजपेन्मंत्रीविशुद्धःशुद्धचेतसा ॥ ७० ॥ मनोनिवेश्यकृष्णेवैतन्मयो
भवतिध्रुवं ॥ यावन्मनोलयंयातिकृष्णेस्वात्मनिचिंतयेत् ॥ ७१ ॥ तावदिष्टमनुंमंत्रीजप
होमैःसमभ्यसेत् ॥ अतःपरंनकिंचित्तत्कृत्यमस्तियतोहरौ ॥ ७२ ॥ विदितेपरतत्वेतुसम

स्तैर्नियमरैलं ॥ तालवृंतेनकिंकार्यंलब्धेमलयमारुते ॥ ७३ ॥ मंत्राभ्यासेनयोगोहिब्रह्मज्ञा
नायकल्पते ॥ नयोगेनविनामंत्रोनमंत्रेणविनाहिसः ॥ ७४ ॥ द्वयोरभ्यासयोगोहिब्रह्मसंसि
द्धिकारणं ॥ तमःपरिवृतेगेहेघटोदीपेनदृश्यते ॥ ७५ ॥ एवंमायावृतोह्यात्मामनुनागोचरी
कृतः ॥ एवंतेकथितंब्रह्मन्मंत्रयोगंमहाद्भुतं ॥७६॥ दुर्लभंविषयासक्तैःसुलभंतादृशामपि ॥
अथापरंप्रवक्ष्यामिसमाधिंभवनाशनम् ॥ ७७ ॥ समाधिःसंविदुत्पत्तिःपरजीवैकतांप्रति ॥
यदिजीवःपराद्भिन्नःकार्यतामेतिसुव्रत ॥ ७८ ॥ अचिंत्यत्वंप्रसज्येतघटवत्पिंडितोजनः ॥
विनाशित्वंभयत्वंचद्वितीयत्वादितिश्रुतिः ॥ ७९ ॥ नित्यःसर्वगतोह्यात्माकूटस्थोदोषवर्जि
तः ॥ एकःसंभिद्यतेभ्रांत्यामाययानस्वरूपतः ॥ ८० ॥ तस्माद्द्वैतंनामनास्तिनप्रपंचोनसं
हृतिः ॥ मठाकाशोघटाकाशोमहाकाशइतीरितः ॥ ८१ ॥ तथाभ्रांतैर्द्विधाप्रोक्तोह्यात्मा
जीवेश्वरात्मना ॥ नाहंदेहोनचप्राणोनेंद्रियाणितथैवच ॥ ८२ ॥ नमनोऽहंनबुद्धिश्चनैवाचि
त्तमहंकृतिः ॥ नाहंपृथ्वीनसलिलंनचवन्हिस्तथानिलः ॥ ८३ ॥ नचाकाशोनशब्दश्चनच
स्पर्शस्तथारसाः ॥ नाहंगंधोनरूपोऽहंनमायाहंनसंसृतिः ॥८४॥ सदासाक्षिस्वरूपत्वात्क
ष्णएवास्मिकेवलं ॥ इतिध्यानंमुनिश्रेष्ठसमाधिरिहचोच्यते ॥ ८५॥ अथवापंचभूतेभ्योजा
तमंडंमहामुने ॥ भूतमाश्रितयादग्ध्वाविवेकेनैववान्हिना ॥८६ ॥ पुनःस्थूलानिभूतानिसुक्ष्म

ष्णएवास्मिकेवलं ॥ इतिध्यानमुनिश्रेष्ठसमाधिरिहोच्यते ॥ ८५॥ अथवापंचभूतेभ्योजा
तमंडंमहामुने ॥ भूतमाश्रितयादग्ध्वाविवेकेनैवान्हिना ॥८६ ॥ पुनःस्थूलानिभूतानिसुक्ष्म

भूतात्मनातथा ॥ विनाश्यैवंविवेकेनततस्तान्यपिबुद्धिमान् ॥ ८७ ॥ मायामात्रंतथाद
ग्ध्वामायार्थप्रत्यगात्मना ॥ सोऽहंकृष्णोनसंसारीनमत्तोऽन्यत्कदाचन ॥८८॥ इतिविद्यात्स्व
मात्मानंससमाधिःप्रकीर्तितः ॥ अथवायोगिनांश्रेष्ठःकृष्णंप्रणवमीक्षयेत् ॥ ८९ ॥ पंचव
र्णात्मनाविद्यात्ककारादिक्रमेणतु ॥ अनिरुद्धःककारस्तुविश्वाख्योमूलविग्रहः ॥ ९० ॥
प्रद्युम्नाख्योलकारेणअंतःकरणवृत्तिकः ॥ अंतःकरणवृत्त्यातुप्रद्युम्नस्तैजसात्मकः ॥ ९१ ॥
संकर्षणोलयाख्यस्तुनिर्विकल्पस्वरूपकः ॥ समाधौसुखरूपोऽसौतुरीयःस्वरएवहि ॥९२॥
तुरीयाख्योवासुदेवोबिंद्वात्माब्रह्मकेवलं ॥ प्राज्ञात्मानंवदंत्येकेएकंचिद्ब्रह्मकेवलं ॥ ९३ ॥
जीवमीश्वरभावेनविंद्यात्सोऽहमितिध्रुवं ॥ एषातुबुद्धिर्विद्वद्भिःसमाधिरितिकीर्तिता ॥९४ ॥
यथाफेनतरंगादिसमुद्रादुत्थितंपुनः ॥ समुद्रेलीयतेतद्वज्जगदात्मनिलीयते ॥ ९५ ॥ तस्मा
न्मत्तःपृथङ्नास्तिजगन्मायाचसर्वदा ॥ इतिबुद्धिसमाधानात्ससमाधिरिहोच्यते ॥ ९६ ॥
यस्यैवंपरमात्माचपृथक्भूतःप्रकाशितः ॥ यस्यातिपरमंभावंस्वयंसाक्षात्परामृतं ॥ ९७ ॥
यदामनसिचैतन्यंभातिसर्वत्रगंसदा ॥ योगिनोऽव्यवधानेनतदासंपद्यतेस्वयं ॥ ९८ ॥ तदा
सर्वाणिभूतानिस्वात्मन्येवहिपश्यति ॥ सर्वभूतेषुचात्मानंब्रह्मसंपद्यतेस्वयं ॥ ९९ ॥ यदा
सर्वाणिभूतानिस्वात्मन्येवहिपश्यति ॥ सर्वभूतेषुचात्मानंब्रह्मसंपद्यतेतदा ॥ १०० ॥ य

दासर्वाणिभूतानिसमाधिस्थोनपश्यति ॥ एकीभूतःपरेणासौतदाभवतिकेवलं ॥ १ ॥ यदा जन्मजरादुःखव्याधीनामेकभेषजं ॥ केवलंब्रह्मविज्ञानंजायतेऽसौतदाहरिः ॥ २ ॥ तस्मा द्विज्ञानतोमुक्तिर्नान्यथाभवकोटिभिः ॥ कर्मसाध्यस्यनित्यत्वंकेचिदिच्छंतितांत्रिकाः ॥३॥ ज्ञानंवेदांताविज्ञानमज्ञानमितरंमुने ॥ अहोज्ञानस्यमाहात्म्यंमयावक्तुंनशक्यते ॥ ४ ॥ यथा वह्निर्महादीप्तःशुष्ककाष्ठंविनिर्दहेत् ॥ तथाशुभाशुभंकर्मज्ञानाग्निर्दहतिक्षणात् ॥ ५ ॥ पद्मपत्रंयथातोयैःस्वल्पैरापिनलिप्यते ॥ तथाशब्दादिभिर्ज्ञानीविषयैर्नविलिप्यते ॥ ६ ॥ मं त्रौषधिबलैर्यद्वज्जीर्यतेभक्षितंविषं ॥ तद्वत्सर्वाणिपापानिजीर्यंतिज्ञानिनःक्षणात् ॥ ७ ॥ बहुनोक्तेनकिंसर्वसंग्रहेणोपपादितं ॥ श्रद्धयागुरुभक्त्यातुविद्धिकैवल्यसंग्रहं ॥ ८ ॥ देहा भिमानेगलितेविदितेपरमात्मनि ॥ यत्रयत्रमनोयातितत्रतत्रसमाधयः ॥ ९ ॥ अहंकृष्णो नचान्योऽस्मिमुक्तोऽहमितिभावयेत् ॥ सच्चिदानंदरूपोऽहंनित्यमुक्तस्वभाववान् ॥ १० ॥ त्वमेवाहमहंत्वंचसाच्चिन्मात्रवपुर्भवान् ॥ आवयोरंतरंकृष्णनश्यत्वाज्ञाबलात्तव ॥ ११ ॥ ए वंसमाधियुक्तोयःसमाधानायकल्पते ॥ सदाकृष्णोऽहमित्युक्त्वास्वेच्छयाविहरेद्यतिः ॥१२॥ लिप्यतेनसपापेनबध्यतेनचकर्मणा ॥ यथाग्निनाद्रुतंस्वर्णमालिन्यंदहतिक्षणात् ॥१३॥ तथा कृष्णार्पितात्मासौकर्मभिर्नचबध्यते ॥ आत्मस्थांदेवतांत्यक्त्वाबहिर्देवंविचिन्वते ॥ १४ ॥

लिप्यतेनसपापेनबध्यते[illegible] ॥ यथा[illegible]तक्षणात् ॥१३॥ तथा
कृष्णार्पितात्मासौकर्मभिर्नचबध्यते ॥ आत्मस्थांदेवतांत्यक्त्वाबहिर्देवंविचिन्वते ॥ १४ ॥



करस्थंकौस्तुभंत्यक्त्वाभ्रमतेकाचचेष्टया ॥ एवंतेकथितंब्रह्मन्ब्रह्मप्राप्तिनिदर्शनं ॥१५॥ वि
ज्ञायगुरुतोभक्त्यासंसारसागरंतरेत् ॥ यत्रयत्रमृतश्चायंस्मशानेश्वपचालये ॥१६॥ब्रह्मविद्ब्रह्म
भूयायकल्पतेनान्यथामुने ॥ इतिविज्ञानविधिनाज्ञानविज्ञानलोचनः ॥१७॥ आनंदोन्मेषसंद
र्शीविहरेत्काश्यपीमिमं ॥ अपक्वयोगीयदिचेन्म्रियतेज्ञानवर्जितः ॥१८॥ मंत्रेणतस्यतत्कुर्याद्य
त्तस्यसांपरायिकं ॥ प्रतिमांतस्ययत्नेनकल्पयेद्घटनेनच ॥१९॥ त्रिरात्रंदशरात्रंवाकृष्णंसर्वोप
चारकैः ॥ विधिज्ञःपूजयेद्भक्त्यातन्मंत्रेणचसाधकः ॥२०॥ गुरुतश्चैकतांनीत्वाकृष्णंचैकात्म
तांनयेत् ॥ जीवन्मुक्तिक्रियाह्येषाप्रेतत्वादिविमोक्षणे ॥२१॥ततश्चकृष्णभूतोऽसौज्ञायतेनान्य
थामुने ॥ अन्नंदद्यात्साधकेभ्योबहुमानपुरःसरं ॥ २२ ॥ श्रीखंडाज्यभोज्यैश्चवस्त्रालंकरणादि
भिः ॥ एतत्तेकथितंविप्रसर्वतंत्रोत्तमोत्तमं ॥२३॥ अस्यविज्ञानमात्रेणकृष्णात्मैक्यंसमश्नुते ॥
नप्रकाश्यमिदंतंत्रंनदेयंयस्यकस्यचित् ॥२४॥ मंत्राःपराङ्मुखायांतिआपदश्चपदेपदे ॥ इह
लोकेचदारिद्र्यंपरत्रपशुतांनयेत्॥२५॥यद्गेहेविद्यतेग्रंथोलिखितस्तत्रवेश्मनि ॥ कमलापिस्थि
राभूत्वाकृष्णेनसहमोदते ॥२६॥ इत्येवंकथितोग्रंथोमयातेमुनिसत्तम ॥ अस्यालोकनतश्चित्ते
कृष्णात्मासुप्रसीदति॥२७॥ इतिश्रीनारदप्रोक्तेगौतमीयतन्त्रे त्रयस्त्रिंशत्तमोऽध्यायः॥३३॥



पुस्तकमिदं इसलामपुरकरोपाभिधेन वामनशास्त्रिशर्मणा संशोध्य मुंबय्यां कर्णाटकाख्यमुद्रायन्त्रालये मुद्रापितम् । शकाब्दाः १८११.
आश्वीनशुक्लप्रतिपदि मुद्रणकार्यं समाप्तिमगमत् । अस्य पुनर्मुद्रणादिकस्य सर्वेऽधिकाराः राजशासनानुसारेण स्वायत्तीकृताः ।

